# संस्कृत-पाठः

## द्वितीय-भागः

पञ्चतन्त्र हितोपदेश चाणक्यशतक नीतिशतक नीतिसार
दृष्टान्तशतक मोहमुद्गर नीतिरत्न रघुवंश रामायण
मार्कण्डेयपुराण महाभारतेभ्यः समुद्धृतैः
प्रबन्धैः परिपूरितः

विषमपदव्याख्यासमेतः

श्रीहरिश्चन्द्र कविरत्नेन सङ्कलितः ।

द्वितीयं संस्करणम् ।

"नन वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः"

कलिकाता-राजधान्याम्
२०, गिरिश विद्यारत्नस लेन, अपर सार्कुलार रोड,
गिरिश-विद्यारत्न-यन्त्रे
मुद्रितः ।
१८८० ।

# বিজ্ঞাপন।

সংস্কৃতপাঠ দ্বিতীয়ভাগ প্রকাশিত হইল। ইহার প্রথম ভাগে যে পদ্ধতি অবলম্বিত হইয়াছে, এই ভাগে তাহা হয় নাই। প্রথম ভাগ সমস্তই রচয়িতার নিজলেখনীবিনির্গত; কিন্তু এই ভাগ নানাবিধ প্রাচীন সংস্কৃত গ্রন্থ হইতে সমুদ্ধৃত প্রবন্ধে পরিপূরিত। ইহার প্রথমে দুইখানি প্রাচীন সংস্কৃত গদ্যগ্রন্থ হইতে দুইটী প্রবন্ধ উদ্ধৃত করিয়া দেওয়া গিয়াছে; এবং শেষে অনেকগুলি সংস্কৃত পদ্যগ্রন্থ হইতে নীতিগর্ভ বিষয়গুলি সঙ্কলন করিয়া নিবেশিত করা গিয়াছে। গ্রন্থের সর্ব্বত্রই দুরূহ পদগুলির অর্থ সম্যক্‌রূপে বিবৃত হইয়াছে। বস্তুতঃ বিদ্যাসাগর মহাশয়-প্রণীত ঋজুপাঠ তৃতীয় ভাগের প্রণালীই অনুসৃত হইয়াছে, কিন্তু তদপেক্ষা বহুতর গ্রন্থ হইতে সারসংগ্রহ করা গিয়াছে। এক্ষণে শিক্ষাবিভাগের অধ্যক্ষ মহাশয়গণ এবং পুস্তক-নির্ব্বাচন-সভার সভ্য মহোদয়বর্গ এই ক্ষুদ্র গ্রন্থের প্রতি কৃপাদৃষ্টি করিলেই শ্রম সার্থক হয়। ইতি

সঙ্কলয়িতা।

---

## দ্বিতীয় সংস্করণের বিজ্ঞাপন।

কলিকাতা বিশ্ববিদ্যালয়ের উদারচিত্ত সভ্য মহাশয়গণ অনুগ্রহ করিয়া এই পুস্তকখানি প্রবেশিকা পরীক্ষার পাঠ্য-পুস্তকরূপে নির্দ্দিষ্ট করিয়াছেন, তজ্জন্য তাঁহাদিগকে শত শত ধন্যবাদ প্রদান করিতেছি। প্রথম সংস্করণের মুদ্রিত পুস্তক-গুলি সমস্তই নিঃশেষিত হইয়াছিল, সুতরাং প্রবেশিকা-পরীক্ষার্থী ছাত্রদিগের জন্য দ্বিতীয় সংস্করণ করিতে হইল। এ বারে স্থানে স্থানে আবশ্যক পরিবর্ত্ত ও নূতন বিবৃতি সন্নিবেশিত করা গিয়াছে। ইতি ১লা নবেম্বর, ১৮৮০ সাল।

সঙ্কলয়িতা।

# निर्घण्टः ।



## प्रथमः परिच्छेदः ।

### गद्यकाव्यानि ।



## द्वितीयः परिच्छेदः ।

### पद्यकाव्यानि ।

# संस्कृत-पाठः ।

## द्वितीय-भागः ।






## प्रथमः परिच्छेदः ।

## गद्यकाव्यानि ।



## पञ्चतन्त्रम् ।

अस्ति कस्मिंश्चिद्देशे मठायतनम्(१)। तत्र देवशर्मा नाम परिव्राजकः(२) प्रतिवसति स्म। तस्य अनेक-यजमान-प्रदत्त-सूक्ष्मवस्त्र-विक्रयवशात् कालेन महती वित्तमात्रा(३) सञ्जाता। ततः स न कस्यचित् विश्वसिति। नक्तन्दिवं कक्षान्तरात् तां न मुञ्चति। अथवा साधु चेदमुच्यते

> अर्थानामर्ज्जने दुःखमर्ज्जितानाञ्च रक्षणे ।
> नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥

---

(१) मठश्छात्रादिनिलय इत्यमरः ।

(२) यः सर्व्वकर्म्माणि परित्यज्य व्रजति, भिक्षुः, यतिः ।

(३) वित्तस्य धनस्य मीयतेऽनया इति मात्रा परिमाणसाधनं, पात्रमित्यर्थः, (बिट्या इति भाषा ।) यद्वा मां लक्ष्मीं त्रायते इति व्युत्पत्त्या मात्रापदं सिद्धम्, धनाधारत्वात् लक्ष्मीनिवासस्थानमिति मन्यते ।

अथ आषाढ़भूति(४) र्नाम परवित्तापहारी धूर्त्तः अर्थमात्रां तस्य कक्षान्तर्गतां लक्षयित्वा व्यचिन्तयत् कथं मयास्येयमर्थमात्रा हर्त्तव्येति। अत्र तावत् मठे दृढ़शिलासञ्चयवशात् भित्तिभेदो(५) न भवति। उच्चैस्तरत्वाच्च द्वारे प्रवेशो न स्यात्। तदेनं मायावचनैः(६) विश्वास्याहं छात्रतां व्रजामि, येन विश्वस्तो भवति। एवं निश्चित्य तस्यान्तिकमुपगम्य "ओं नमः शिवाय" इति ब्रुवाणः साष्टाङ्गं प्रणम्य च सप्रश्रय-(७) मुवाच, "भगवन्, असारोऽयं संसारः। तृणाग्नि-समं जीवितम्। अभ्रच्छायासदृशा(८) भोगाः। स्वप्नसदृशः पुत्र-कलत्र-मित्र-वर्गसम्बन्धः। एतन्मया सम्यक् परिज्ञातम्। तत् किं कुर्व्वतो मे संसारसमुद्रोत्तरणं भविष्यति?"

तच्छ्रुत्वा देवशर्म्मा सादरमाह, वत्स, धन्योऽसि त्वं, यत् प्रथमे वयस्येवं विरक्तभावः। उक्तञ्च

पूर्व्वे वयसि यः शान्तः स शान्त इति मे मतिः।
धातुषु क्षीयमाणेषु शमः कस्य न जायते॥

(४) आषाढः पालाशदण्डः भूतिः सम्पत्तिर्यस्य सः, आषाढ़धर इत्यर्थः।
(५) सन्धिखननादिना भित्तिवेध इति यावत्।
(६) कपटवाक्यैः। (७) सविनयम्।
(८) मेघच्छायातुल्याः। वियति मेघविवर्त्तनात् भुवि या छाया पतति तद्वत् क्षणस्थिरा इति भावः।

तच्छ्रुत्वा आषाढ़भूतिस्तत्पादौ गृहीत्वा सप्रश्रयमिदमुवाच, भगवन्, तर्हि व्रतप्रदानेन मम प्रसादः क्रियताम्। देवशर्म्मा प्राह, वत्स, अनुग्रहं ते करिष्यामि, परं रात्रौ त्वया मठमध्ये न प्रवेष्टव्यम्; यतो निःसङ्गता यतीनां प्रशस्यते। तत् त्वया व्रतग्रहणादूर्द्ध्वं(९) मठद्वारे तृणकुटीरके शयितव्यमिति। स चाह, भगवन्, भवदादेशः प्रमाणम्(१०)। अथ तं देवशर्म्मा अनुग्रहं दत्त्वा शास्त्रोक्तविधानेन शिष्यतामनयत्। सोऽपि विविधपरिचर्य्यया तं परं परितोषमनयत्। पुनस्तथापि मुनिः कक्षान्तरात् मात्रां न मुञ्चति।

अथैवं गच्छति काले आषाढ़भूतिश्चिन्तयामास, अहो न कथञ्चिदप्येष मे विश्वासमागच्छति। तत् किं दिवापि शस्त्रेण मारयामि, किंवा विषं प्रयच्छामि, किंवा पशुधर्म्मेण(११) व्यापादयामि। एवं चिन्तयतस्तस्य, देवशर्म्मणोऽपि शिष्यपुत्रः कश्चिद् ग्रामादामन्त्रणार्थं समायातः; प्राह च, भगवन्, पवित्रा-

(९) अनन्तरं, परम्।

(१०) मया प्रमाणीक्रियते इत्यर्थः।

(११) पशूनां सिंहव्याघ्रादीनां धर्म्मः वधप्रकारस्तेन, हस्तपादादिनेत्यर्थः।

रोपणविषये(१२) मम गृहमागम्यतामिति। तच्छ्रुत्वा देवशर्म्मा आषाढ़भूतिना सह प्रहृष्टमनाः प्रस्थितः। अथैवं तस्य गच्छतोऽग्रे काचिन्नदी समायाता। तां दृष्ट्वा मात्रां कक्षान्तरादवतार्य्य कन्थामध्ये सुगुप्तां निधाय आषाढ़भूतिमिदमाह, भो आषाढ़भूते, यावदहं स्नात्वा देवार्च्चनं विधाय च समागच्छामि तावदेषा कन्था योगेश्वरस्य(१३) सावधानतया रक्षणीया। इत्युक्त्वा गतः। आषाढ़भूतिरपि तस्मिन्नदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः। देवशर्म्मापि छात्रगुणानुरञ्जितमनाः सुविश्वस्तो निर्व्वर्त्तितव्यापारः शनैः शनैर्यावदागच्छति तावदाषाढ़भूतिं न पश्यति। ततश्च औत्सुक्येन यावत् कन्थामालोकयति तावन्मात्रा नास्ति। ततश्च 'हाहा मुष्टोऽस्मीति'(१४) जल्पन् भूतले मूर्च्छया निपपात। तत्क्षणात् चेतनां लब्ध्वा भूयोऽपि समुत्थाय फुत्कर्त्तुमारब्धः—"भो भो आषाढ़भूते! मां वञ्चयित्वा क्व गतोऽसि, तद्देहि मे प्रतिवचनम्।" एवं बहुविधं विलप्य तस्य पादपद्धतिमन्वेषयन् शनैः शनैः प्रस्थितः।

(१२) पवित्रस्य यज्ञोपवीतस्य आरोपणं विष्णवे समर्पणम्। श्रावणशुक्लद्वादश्यां विष्णुविग्रहे यज्ञोपवीतदानरूप उत्सवे।

(१३) विष्णोः। (१४) मुषितोऽस्मि, अपहृतवित्तनावोऽस्मीत्यर्थः।

# हितोपदेशः।

अस्ति कर्पूरद्वीपे पद्मकेलि-नामधेयं सरः। तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति। स च सर्व्वै-र्जलचरपक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः। यतः

यदि न स्यान्नरपतिः सम्यक् नेता (१) ततः प्रजा।
अकर्णधारा जलधौ विप्लवेतेह नौरिव॥

एकदासौ राजहंसः सुविस्तीर्ण-कमल-पर्य्यङ्के सुखासीनः परिवारपरिवृतस्तिष्ठति। ततः कुतो-ऽपि देशादागत्य दीर्घमुखो नाम वकः प्रणम्योप-विष्टः। राजोवाच, दीर्घमुख, देशान्तरादागतोऽसि, वार्त्तां कथय। स ब्रूते, देव (२) अस्ति महती वार्त्ता, तामाख्यातुकामः (३) सत्वरमागतोऽहम्। श्रूयताम्। अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः। तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति। तस्यानुचरै-श्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये चरन्नवलोकितः, पृष्टश्च कस्त्वं? कुतः समायातोऽसि?। ततो मयोक्तम्,

---

(१) नायकः, शासनकर्त्तेति यावत्।

(२) देव राजन्। राज्ञः देवांशरूपत्वमुक्तं मनुना —
"अष्टानां लोकपालानां वपुर्धारयते नृपः।"
"महती देवता ह्येषा नररूपेण तिष्ठति।" इत्यादि।

(३) आख्यातुं वक्तुं कामः अभिलाषो यस्य सः, वक्तुमिच्छुः।

अहं कर्पूरद्वीपस्य राज्ञो हिरण्यगर्भस्य अनुचरः, कौतुकात् देशान्तरं द्रष्टुमागतोऽस्मि। तच्छ्रुत्वा, पक्षिभिरुक्तम्, अनयोर्देशयोः को देशो भद्रतरो राजा च?। ततो मयोक्तम्, आः! किमेवमुच्यते, महदन्तरम्(४); यतः कर्पूरद्वीपः स्वर्ग एव, राजा च द्वितीयः स्वर्गपतिः, कथं वर्णयितुं शक्यते। अत्र मरुस्थले पतिता यूयं किं कुरुथ? आगच्छथ, अस्मद्देशो गम्यताम्। ततो मद्वचनमाकर्ण्य पक्षिणः सकोपा बभूवुः। तथा चोक्तम्

पयःपानं भुजङ्गानां केवलं विषवर्द्धनम्।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये॥

अन्यच्च

विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन।
वानरानुपदिश्याज्ञान् स्थानभ्रष्टा ययुः खगाः॥

राजोवाच कथमेतत्?। दीर्घमुखः कथयति। अस्ति नर्मदातीरे पर्वतोपत्यकायां विशालः शाल्मलीतरुः। तत्र निजचञ्चुनिर्मितनीडक्रोडे पक्षिणः सुखेन वर्षास्वपि निवसन्ति। अथैकदा वर्षासु नीलपटैरिव(५) जलधरपटलैरावृते नभस्तले धारा-

(४) महान् भेदः। परस्परसादृश्यं नैव युज्यते इत्यर्थः।
(५) नीलवर्णपरिच्छदैरिव, नीलपटैरिवेत्यर्थः।

धारासारैः(६) महती वृष्टिर्बभूव। ततो वानरांश्च तरुतले अवस्थितान् शीतार्त्तान् कम्पमानानवलोक्य पक्षिभिरुक्तम्, भो भो वानराः, शृणुत।

अस्माभिर्निर्म्मिता नीड़ाश्चञ्चुमात्राहृततृणैः।
हस्तपादादिसंयुक्ता यूयं किमवसीदथ(७)॥

तच्छ्रुत्वा वानरैर्जातामर्षैरालोचितम्, अहो! निर्व्वातनीड़गर्भावस्थिताः सुखिनः पक्षिणोऽस्मान् निन्दन्ति। तद्भवतु तावद्वृष्टेरुपशमः। अनन्तरं शान्ते पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्व्वे नीड़ाः भग्नाः तेषां पक्षिणामण्डानि चाधः पातितानि।

राजोवाच, तदा पक्षिभिः किमुक्तम्? बकः कथयति। ततः पक्षिभिः कोपादुक्तम्, केनासौ राजहंसः कृतो राजा?। ततो मया उपजातकोपेनोक्तम्, अयं युष्माकं मयूरः केन राजा कृतः?। तच्छ्रुत्वा ते पक्षिणो मां हन्तुमुद्यताः। ततो मयापि स्वविक्रमो दर्शितः। राजा विहस्याह

आत्मनश्च परेषाञ्च यः समीक्ष्य बलाबलम्।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः॥

(६) धारासम्पातैः। "धारासम्पात आसारः" इत्यमरः।
(७) अवसन्ना भवथ, क्लेशमनुभवथेति यावत्।

अन्यच्च

सुचिरं हि चरन् नित्यं क्षेत्रे शस्यमबुद्धिमान्।
द्वीपिचर्म्मपरिच्छन्नो वाग्दोषात् गर्द्दभो हतः॥

वकः पृच्छति कथमेतत्? राजा कथयति। अस्ति हस्तिनापुरे विलासो नाम रजकः। तस्य गर्द्दभोऽतिभारवहनात् दुर्ब्बलो मुमूर्षुरभवत्। ततस्तेन रजकेनासौ व्याघ्रचर्म्मणा प्रच्छाद्य अरण्यसमीपे शस्यक्षेत्रे मोचितः। ततो दूरात्तमवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते। गर्द्दभोऽपि स्वच्छन्दं चरति।

अथैकदा केनापि शस्यरक्षकेण धूसरकम्बलकृततनुत्राणेन धनुःकाण्डं(८) सज्जीकृत्य अवनतकायेनैकान्ते स्थितम्। ततस्तञ्च दूरे दृष्ट्वा गर्द्दभः सजातीयोऽयमिति मत्वा उच्चैः शब्दं कुर्व्वाणस्तदभिमुखं धावितः। ततस्तेन शस्यरक्षकेण गर्द्दभोऽयमिति ज्ञात्वा लीलयैव(९) व्यापादितः।

दीर्घमुखो ब्रूते, पश्चात्तैः पक्षिभिरुक्तम्, अरे पाप दुष्ट वक! अस्माकं भूमौ चरन् अस्माकं स्वामिनमधिक्षिपसि(१०)? । तन्न क्षन्तव्यमिदानीम्। इत्युक्त्वा

(८) धनुर्बाणम्। (९) अनायासेनैव। (१०) निन्दसि।

सर्वैः मां चञ्चुभिर्हत्वा सकोपा ऊचुः, पश्य रे मूर्ख ! स हंसस्तव राजा सर्वथा मृदुः(११), तस्य राज्याधिकारो नास्ति, यतः एकान्तमृदुः करतलस्थमप्यर्थं रक्षितुमक्षमः, स कथं पृथिवीं शास्ति ; राज्यं वा तस्य किम् ? । त्वञ्च कूपमण्डूकः(१२) तेन तदाश्रयणमुपदिशसि । शृणु

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्यते ॥

ततो मयोक्तम्, स एवास्मत्प्रभुः महाप्रतापोऽतिसमर्थः, त्रैलोक्यस्यापि प्रभुत्वं तस्मिन् युज्यते, किं पुनाराज्यमिति । तदाहं तैः पक्षिभिः "दुष्ट ! कथमस्मद्भूमौ चरसि" इत्यभिधाय चित्रवर्णस्य राज्ञः समीपं नीतः । ततो राज्ञः पुरतो मां प्रदर्श्य तैः प्रणम्योक्तम्, देव, अवधीयताम्, एष दुष्टवकोऽस्मद्देशे चरन्नपि देवपादानधिक्षिपति । राजाह, कोऽयं ? कुतः समायातः ? । ते ऊचुः, हिरण्यगर्भनाम्नो राजहंसस्य अनुचरः, कर्पूरद्वीपादागतः । अथाहं गृध्रेण मन्त्रिणा पृष्टः, कस्तत्र मुख्यो मन्त्रीति । मयोक्तम्,

(११) दुर्बलः, परिहीणः । "मृदुर्हि परिभूयते" इति ।

(१२) कूपवासी मण्डूकः भेकः प्रायेण कूपमेव जगत् मन्यते, अतः अदूरदर्शीति तिरस्कारवचनम् ।

सर्व्वशास्त्रार्थपारगः सर्व्वज्ञो नाम चक्रवाकः। गृध्रो ब्रूते, युज्यते, स्वदेशजोऽसौ ।

स्वदेशजं कुलाचारविशुद्धमुपधाशुचिम्(१३)।
शास्त्रज्ञमव्यसनिनं (१४) विदध्यान्मन्त्रिणं नृपः॥

अत्रान्तरे शुकेनोक्तम्, देव, कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव। तत्रापि देवपादानामाधिपत्यम्। ततो राज्ञाप्युक्तम्, एवमेव। यतः

राजा मत्तः शिशुश्चैव प्रमादी धनगर्व्वितः।
अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यते हि यत्॥

ततो मयोक्तम्, यदि वचसैव तत्रापि श्रीमद्देवपादानामाधिपत्यं सिध्यति, तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति। शुक उवाच, कथमत्र निर्णयः? मयोक्तम् संग्राम एव। राज्ञा विहस्योक्तम्, स्वस्वामिनं गत्वा सज्जीकुरु। तदा मयोक्तम्, स्वदूतोऽपि प्रस्थाप्यताम्। राजोवाच, कः प्रयास्यति दौत्येन? यतः एवम्भूतो दूतः कार्य्यः,

(१३ धर्म्मादिभिः परीक्षणमुपधा। "उपधा धर्म्माद्यैर्यत् परीक्षणम्" इत्यमरः। यस्य मन्त्रिणो राजभक्ति-स्वार्थपरताभाव-वशित्व-निर्भीकत्वादिगुणाः परीक्षया अवगम्यन्ते, स उपधाशुचिः।

(१४ कामजकोपजादिदोषशून्यम्।

भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी।
ब्राह्मणः परमर्म्मज्ञो दूतः स्यात् प्रतिभानवान्(१५)॥

गृध्रो वदति, सन्त्येवम्भूता बहवः। राजाह, ततः शुक एव व्रजतु। शुक, त्वमेवानेन सह गत्वा अस्मदभिलषितं ब्रूहि। शुकोऽवदत्, यथाज्ञापयति देवः। किन्त्वयं दुर्ज्जनो वकः। दुर्ज्जनेन सह न व्रजामि। तथा ह्युक्तम्

न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्।
काकसङ्गाद्धतो हंसस्तिष्ठन्, गच्छंश्च वर्त्तकः(१६)॥

राजोवाच, कथमेतत्?। शुकः कथयति। अस्त्युज्जयिनीवर्त्मप्रान्तरे महान् प्लक्षतरुः(१७)। तत्र हंसकाकौ निवसतः। कदाचित् ग्रीष्मसमये परिश्रान्तः कश्चित् पथिकः तत्र तरुतले धनुःकाण्डं सन्निधाय सुप्तः। ततः क्षणान्तरे तन्मुखाद्वृक्षच्छाया अपगता। अनन्तरं सूर्य्यतेजसा तन्मुखं व्याप्तमालोक्य कृपया पुण्यात्मना तद्वृक्षस्थितेन हंसेन पक्षौ प्रसार्य्य पुनस्तन्मुखे छाया कृता। ततो निर्भरनिद्रासुखिना तेन पान्थेन मुखव्यादानं कृतम्। अनन्तरं स्वभाव-

(१५) साहसी, प्रत्युत्पन्नमतिर्वा।
(१६) पक्षिविशेषः, भाकइ, इति भाषा।
(१७) पर्कटीवृक्षः, (पाकड़) इति भाषा।

दौर्ज्जन्येन स काकस्तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायितः । ततो यावदसौ पान्थः उत्थाय ऊर्द्धं निरीक्षते, तावत्तेनावलोकितो हंसः काण्डेन हतः ।

देव, वर्त्तककथामपि कथयामि । एकः काको वृक्षशाखायां स्वपिति । वर्त्तकस्तस्याधस्तात् भूमौ निवसति । एकदा सर्व्वे पक्षिणो भगवतो गरुड़स्य यात्राप्रसङ्गेन समुद्रतीरं चलिताः । तत्र काकेन सह वर्त्तकश्चलितः । अथ गोपालस्य गच्छतो मस्तकावस्थितभाण्डात् दधि वारं वारं तेन काकेन खाद्यते । ततो यावदसौ दधिभाण्डं भूमौ निधाय ऊर्द्धमवलोकते, तावत् काकवर्त्तकौ दृष्टौ । ततस्तेन खेदितः(१८) काकः पलायितः । वर्त्तको मन्दगतिस्तेन प्राप्तो व्यापादितः ।

ततो मयोक्तम्, भ्रातः शुक, किमेवं ब्रवीषि, मां प्रति यथा श्रीमद्देवपादाः तथा भवानपि । शुको ब्रूते, अस्त्येवं, किन्तु

दुर्ज्जनैरुच्यमानानि सम्मितानि प्रियाण्यपि ।
अकालकुसुमानीव भयं सञ्जनयन्ति हि ॥

दुर्ज्जनत्वञ्च तव वाक्यादेव ज्ञातम्, यदनयोः भूपालयोर्विग्रहे भवद्वचनमेव निदानम् ।

(१८) परिहृतः, ताड़ित इति यावत् ।

ततोऽहं तेन राज्ञा यथाव्यवहारं संपूज्य प्रस्थापितः। शुकोऽपि मम पश्चादागच्छन् आस्ते। एतत् सर्व्वं ज्ञात्वा यथा कार्य्यमनुसन्धीयताम्।

चक्रवाको विहस्याह, देव, बकेन तावद्देशान्तरं गत्वा यथाशक्ति राजकार्य्यमनुष्ठितम्। किन्तु स्वभाव एष मूर्खाणाम्,

शतं दद्यान्न विवदेदिति विज्ञस्य लक्षणम्।
विना हेतुमपि द्वन्द्वमिति मूर्खस्य लक्षणम्॥

राजाह अलमनेनातीतोपालम्भेन, प्रस्तुतमनुसन्धीयताम्। चक्रवाको ब्रूते, देव, विजने ब्रवीमि। यतः

वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत्॥ (१८)

ततो राजा मन्त्री च तत्र स्थितौ, अन्येऽन्यत्र गताः। चक्रवाको ब्रूते, देव, अहमेवं जानामि कस्यापि अस्मन्नियोगिनः प्रेरणया बकेनेदमनुष्ठितम्। राजाब्रवीत्, भवतु, कारणमत्र पश्चान्निरूपणीयम्। सम्प्रति यत् कर्त्तव्यं तद्ब्रूहि। चक्र-

१८ वर्णः मुखरागादिः, आकारः मुखभङ्ग्यादिः, प्रतिध्वानः गद्गदादिस्वरः। नेत्रवक्त्रविकारैः तद्योगाकुञ्चनप्रसारणादिभिर्विकृतैरिति यावत्। अप्यूहन्ति तर्कयन्ति निरूपयन्तीति [illegible]त्। मन्त्रयेदित्यत्र महाकविप्रयोगात् परस्मैपदम्।

बाको ब्रूते, देव, प्रणिधिस्तावत् प्रहीयताम्। ततस्तदनुष्ठानं बलाबलञ्च जानीमः । तथाहि

भवेत् स्वपरराष्ट्राणां कार्य्याकार्य्यावलोकने ।
चारश्चक्षुर्महीभर्त्तुर्यस्य नास्त्यन्ध एव सः ॥

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु, तेनासौ स्वयं तत्रावस्थाय द्वितीयं तत्रत्यमन्त्रकार्य्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयतु । गूढ़चारश्च यो जले स्थले चरति । ततोऽसावेव बको नियुज्यताम् । एतादृश एव कश्चिद्बको द्वितीयत्वेन प्रयातु । तद्गृहलोकाश्च राजद्वारे तिष्ठन्तु । किन्तु देव एतदपि सुगुप्तमनुष्ठातव्यम् । यतः

षट्कर्णो भिद्यते मन्त्रः तथा प्राप्तश्च वार्त्तया(२०) ।
इत्यात्मना द्वितीयेन मन्त्रः कार्य्यो महीभृता ॥

राजा विमृश्योवाच, प्राप्तस्तावन्मयोत्तमः प्रणिधिः । मन्त्री ब्रूते, देव, संग्रामे विजयोऽपि प्राप्तः । अत्रान्तरे प्रतीहारः प्रविश्य प्रणम्योवाच, देव, जम्बुद्वीपादागतो द्वारि शुकस्तिष्ठति । राजा चक्रवाकमालोकते । चक्रवाकेणोक्तम्, तावद् गत्वा वासे तिष्ठतु, पश्चादानीय द्रष्टव्यः । तच्छ्रुत्वा प्रतीहारस्तमावास-

(२०) वार्त्तया जनश्रुत्या प्राप्तः ज्ञातः

स्थानं नीत्वा गतः । राजाह विग्रहस्तावदुपस्थितः । चक्रवाको ब्रूते, देव, प्रागेव विग्रहो न विधिः ।

स किंभृत्यः स किंमन्त्री(२१) य आदावेव भूपतिम् ।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम् ॥
साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।(२२)
विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ॥

किन्तु विग्रहमुपस्थितं विलोक्य व्यवह्रियताम् । विशेषतश्च देव, महाबलोऽसौ राजा चित्रवर्णः । अतो दूतोऽयं शुकः अत्राश्वास्य तावत् ध्रियताम्, यावद्दुर्गं सज्जीक्रियते । राजाह, दुर्गानुसन्धाने को नियुज्यताम् ? चक्रवाको ब्रूते,

यो यत्र कुशलः कार्य्ये तं तत्र विनियोजयेत् ।
कार्य्येष्वदृष्टकर्म्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥

तदाहूयतां सारसः ।

तथानुष्ठिते सति समागतं सारसमालोक्य राजोवाच, सारस, त्वं सत्वरं दुर्गमनुसन्धेहि ।

---

(२१) किंभृत्यः कुत्सितो भृत्यः, किंमन्त्री कुत्सितो मन्त्री । "स किंसखा साधु न शास्ति योऽधिपम्" इत्यादि किरातार्जुनीयम् ।

(२२) साम्ना सान्त्ववचनप्रयोगेण मन्त्रिणेति यावत्, दानेन राज्यांश-त्यागेन धनदानेन वा, भेदेन उपजापेन शत्रोरमात्यादिषु परस्परमनैक्यमुत्पादनेन,—एतैः समस्तैरेकत्र मिलितैरथवा पृथक् व्यस्तैर्वा उपायैरिति शेषः ।

सारसः प्रणम्योवाच, देव, दुर्गं तावदिदमेव चिरात् सुनिरूपितमास्ते महत् सरः। किन्त्वेतन्मध्यवर्त्तिद्वीपे द्रव्यसंग्रहः कार्य्यताम्। यतः

धान्यानां संग्रहो राजन्नुत्तमः सर्व्वसंग्रहात्।
निक्षिप्तं हि मुखे रत्नं न कुर्य्यात् प्राणधारणम्॥

राजाह, सत्वरं गत्वा सर्व्वमनुतिष्ठ। पुनः प्रविश्य प्रतीहारो ब्रूते, देव, सिंहलद्वीपादागतो मेघवर्णो नाम वायसराजो द्वारि सपरिवारो वर्त्तते। स च देवपादान् द्रष्टुमिच्छति। राजाह, काकः प्राज्ञो बहुदर्शी च, तद्भवति संग्राह्यः। चक्रवाको ब्रूते, देव, अस्त्येवं, किन्त्वस्मद्विपक्षः काकः स्थलचरः, तेनास्मद्विपक्षपक्षे नियुक्तः स कथं संगृह्यते !। राजाह, यद्यप्येवं तथापि दृश्यतां तावदयं दूरादागतः, तत्संग्रहे विचारः(२३) कार्य्यः।

चक्रवाको ब्रूते, देव, प्रणिधिः प्रहितः, दुर्गञ्च सज्जीकृतम्, अतः शुकोऽप्यानीय प्रस्थाप्यताम्। ततः सभां कृत्वा आहूतः शुकः काकश्च। शुकः किञ्चिदुन्नतशिरा दत्तासने उपविश्य ब्रूते, भो हिरण्यगर्भ,

---

(२३) तत्संग्रहे तस्यास्मत्सहायत्वेन ग्रहणे विचारः कर्त्तव्याकर्त्तव्यतावधारणं कार्य्यः कर्त्तव्यः पश्चादिति शेषः।

महाराजाधिराजः श्रीमच्चित्रवर्णस्त्वां समाज्ञापयति, यदि जीवितेन श्रिया वा प्रयोजनमस्ति, तदा सत्वरमागत्य अस्मच्चरणौ प्रणम, नो चेदवस्थातुं स्थानान्तरं चिन्तय । राजा सकोपमाह, आः कोऽप्यस्माकं पुरतो नास्ति, य एनं गलहस्तयति । (२४) उत्थाय मेघवर्णो ब्रूते, देव, आज्ञापय हन्मि दुष्टं शुकम् । मन्त्री राजानं काकञ्च शान्तयन् ब्रूते,

दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥

ततो राजा काकश्च प्रकृतिमापन्नः । शुकोऽप्युत्थाय चलितः । पश्चात् चक्रवाकेणानीय प्रबोध्य कनकालङ्कारादिकं दत्त्वा संप्रेषितः स्वदेशं ययौ । ततो विन्ध्याचलं गत्वा राजानं चित्रवर्णं प्रणतवान् । राजोवाच, शुक ! का वार्त्ता ? कीदृशोऽसौ देशः ? । शुको ब्रूते, देव, संक्षेपादियं वार्त्ता, सम्प्रति युद्धोद्योगः क्रियताम् । देशश्चासौ कर्पूरद्वीपः स्वर्गैकदेशः कथं वर्णयितुं शक्यते ।

राजा सर्वान् शिष्टानाहूय मन्त्रयितुमुपविष्टः । आह च, सम्प्रति यथा कर्त्तव्यं तद् ब्रूत । विग्रहः

(२४) गले हस्तं दत्त्वा एनं शुकं निःसारयति इत्यर्थः ।

पुनरवश्यं कर्त्तव्यः । दूरदर्शी नाम गृध्रो ब्रूते, देव, व्यसनितया विग्रहो न विधिः । यतः

मित्रामात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः(२५) ।
शत्रूणां विपरीताश्च(२६) कर्त्तव्यो विग्रहस्तदा ॥

राजाह, मम बलानि तावदालोकयतु मन्त्री । तदैतेषामुपयोगो(२७) ज्ञायताम् । एवमाहूयतां मौहूर्त्तिकः(२८) शुभलग्नं यात्रार्थं विदधातु । मन्त्री वदति, देव, तथापि सहसा यात्राकरणमयुक्तम् । यतः,

विशन्ति सहसा मूढा येऽविचार्य्य द्विषद्बलम् ।
खड्गधारापरिष्वङ्गं(२९) लभन्ते ते सुनिश्चितम् ॥

राजाह, मन्त्रिन्, ममोत्साहभङ्गं सर्व्वथा मा कृथाः । विजिगीषुर्यथा परभूमिमाक्रामति

(२५) दृढं यथा तथा भक्तिरनुरागो येषां ते, प्रभुपरायणा इति यावत् । दृढा भक्तिर्येषामिति समासे तु 'दृढाभक्तयः' इत्येवं पदं स्यात् ।

(२६) शत्रूणां मित्रामात्यसहाया इति शेषः, विपरीताः अदृढभक्तयः, विरक्ता इति भावः ।

(२७) उपयोगिता, योग्यत्वम् । बलानां नृपानुरक्तत्वमेव यात्रार्थमुपयोगि नान्यथेति भावः ।

(२८) मुहूर्त्तज्ञः दैवज्ञः ।

(२९) परिष्वङ्गम् आश्लेषम् आलिङ्गनमिति यावत् । खड्गधारापरिष्वङ्गं लभन्ते द्विषतां खड्गमुखे निपतिताः म्रियन्ते इत्यर्थः ।

तथोपदिश । गृध्रोऽब्रवीत्, देव, तत् कथयामि, किन्तु तदनुष्ठितमेव फलप्रदम् । तथाचोक्तं

किं मन्त्रेणाननुष्ठानात् शास्त्रवत् पृथिवीपतेः ।(३०)
न ह्यौषधपरिज्ञानात् व्याधेः शान्तिः क्वचित् भवेत् ॥

राजादेशश्चानतिक्रमणीय इति यथा श्रुतं तन्निवेदयामि । शृणु,

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप ।
तत्र तत्र च सेनानीर्यायात् व्यूहीकृतैः(३१) बलैः ॥
बलाध्यक्षः पुरो यायात् प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोषः फल्गु च यद्बलम् ॥(३२)
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वतो नागा नागानाञ्च पदातयः ॥

तत उत्थाय राजा मौहूर्त्तिकावेदितलग्ने प्रस्थितः ।

अथ प्रणिधिप्रहितश्चरो हिरण्यगर्भसमीपमागत्य प्रणम्योवाच, देव, समागतप्रायो राजा चित्रवर्णः, सम्प्रति मलयपर्व्वताधित्यकायां समावासितकटको(३३) वर्त्तते । दुर्गशोधनं प्रतिक्षण-

(३०) शास्त्रं यथा विध्यनुष्ठानं विना न फलप्रदम्, तथा मन्त्रोऽपि [redacted] विना वृथैव भवतीति भावः ।

(३१) विहितव्यूहरचनैः समुचितस्थानसन्निवेशितैरित्यर्थः ।

(३२) फल्गु हीनबलम् असारमिति यावत् ।

(३३) सन्निवेशितसैन्यः, यद्वा कटकं पटवासं संस्थाप्येत्यर्थः ।

मनुसन्धातव्यम् । यतोऽसौ गृध्रो महामन्त्री । किञ्च केनचित् सह तस्य विश्वासकथाप्रसङ्गेन एतदिङ्गितमवगतं मया, यदनेन प्रागेव कोऽपि अस्मद्दुर्गे नियुक्तः । चक्रवाको ब्रूते, देव, काकएवासौ सम्भवति । राजाह, न कदाचिदेतत् । यद्येवं तदा कथं तेन शुकस्य अभिभवोद्योगः कृतः । अपरञ्च शुकस्यागमनात् तस्य विग्रहोत्साहः । स च चिरादत्रास्ते । मन्त्री वदति, तथाप्यागन्तुकः शङ्कनीयः । राजाह, आगन्तुका अपि प्रत्युपकारकारिणो दृश्यन्ते । शृणु,

आसीद्वीरवरो नाम शूद्रकस्य महीपतेः ।
सेवकः, स्वल्पकालेन स ददौ सुतमात्मनः ॥

चक्रवाकः पृच्छति, कथमेतत् ? राजा कथयति । पुरा किल नरपतिरासीत् शूद्रको नाम । अथैकदा वीरवरो नाम राजपुत्रः कुतश्चित् देशादागत्य राजद्वारि प्रतीहारमुवाच, "अहं वर्त्तनार्थी (३४) राजपुत्रः, मां राजदर्शनं कारय" । ततस्तेनासौ राजदर्शनं कारितो ब्रूते, देव यदि मया सेवकेन प्रयोजनमस्ति तदास्मद्वर्त्तनं क्रियताम् ।

(३४) वर्त्तनं वेतनम् अर्थयते इति वर्त्तनार्थी वेतनकामः ।

शूद्रक उवाच, किं ते वर्त्तनम्?। वीरवरेणोक्तम्, प्रत्यहं सुवर्णशतचतुष्टयम्। राजाह, का ते सामग्री? वीरवरो ब्रूते, द्वौ बाहू तृतीयश्च खड्गः। राजाह, नैतच्छक्यम्। तच्छ्रुत्वा वीरवरः प्रणम्य चलितः। अथ मन्त्रिभिरुक्तम्, देव, दिनचतुष्टयस्य वर्त्तनं दत्त्वा ज्ञायतामस्य स्वरूपं, किमुपयुक्तोऽयमेतावद्वर्त्तनं गृह्णाति, अनुपयुक्तो वेति। ततो मन्त्रिवचनादाहूय ताम्बूलं दत्त्वा (३५) तद्वर्त्तनं दत्तवान्। वर्त्तनविनियोगश्च राज्ञा सुनिभृतं निरूपितः (३६)। तदर्द्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तम्। स्थितस्यार्द्धं दुःखितेभ्यः। तदवशिष्टं भोज्यव्ययविलासव्ययेन। एतत् सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते। यदा च राजा स्वयमादिशति, तदा स्वगृहमपि याति।

अथ कृष्णचतुर्द्दश्यां रात्रौ सकरुण-क्रन्दनध्वनिं स राजा शुश्राव। तं श्रुत्वा राजाह, कः कोऽत्र द्वारि तिष्ठति?। तदा तेनोक्तम्, देव, अहं वीरवरः।

३५। पुरा ताम्बूलदानं वर्त्तनविनियोगपत्रप्रतिरूपकमासीत्।

३६) वीरवरेण तद्वर्त्तनं कीदृशकार्य्येषु विनियोजितं, राज्ञा गूढरूपेण तत् सर्व्वं दृष्टमित्यर्थः।

राजोवाच, क्रन्दनानुसरणं क्रियताम् । वीरवरोऽपि यथाज्ञापयति देव इत्युक्त्वा चलितः । राज्ञा चिन्तितम्, अयमेकाकी राजपुत्रो मया सूचिभेद्ये(२७) तमसि प्रहितः, तदनुचितम् । अहमपि गत्वा निरूपयामि किमेतदिति । ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगराद्बहिर्निर्जगाम ।

ततो गत्वा वीरवरेण रुदती रूपसम्पन्ना सर्व्वालङ्कारभूषिता काचित् स्त्री दृष्टा, पृष्टा च "का त्वं, किमर्थं रोदिषि" इति । स्त्रियोक्तम्, अहमेतस्य शूद्रकस्य राज्ञो लक्ष्मीः, चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता । दैव्या अपराधेन तृतीयदिवसे राजा पञ्चत्वं यास्यति, अहमनाथा भविष्यामि, तदानीमन्यत्र गमिष्यामीति रोदिमि । वीरवरो ब्रूते, यत्रापायः सम्भवति, तत्रोपायोऽप्यस्ति । तत् कथं पुनरिहावासो भगवत्या भवति ? । लक्ष्मीरुवाच, यदि त्वमात्मनः पुत्रस्य शक्तिधरस्य मस्तकं स्वहस्तेन छित्त्वा भगवत्याः सर्व्वमङ्गलाया उपहारं करोषि,

(२७) सूच्या भेद्ये, अतिनिविड़े इत्यर्थः ।
"सूचिभेद्यैस्तमोभि"रिति मेघदूतम् ।

तदा राजा शतायुर्भविष्यति। अहमपि सुखं निवसामि। इत्युक्त्वा अदृश्याभवत्।

ततो वीरवरेण स्वगृहं गत्वा निद्रालसा वधूः प्रबोधिता, पुत्रश्च। तौ निद्रां परित्यज्य उपविष्टौ। वीरवरस्तत सर्व्वं लक्ष्मीवचनमुक्तवान्। तच्छ्रुत्वा शक्तिधरः सानन्दं ब्रूते, धन्योऽहमेवम्भूतः, स्वामिराज्यरक्षार्थं यन्ममोपयोगः। तत् तात, कोऽधुना विलम्बस्य हेतुः?। यतः एवंविधे कर्म्मणि देहस्य विनियोगः श्लाघ्यः। शक्तिधरस्य माता ब्रूते, यद्येतन्न कर्त्तव्यं तत् केनान्येन कर्म्मणा मुख्यस्य महावर्त्तनस्य निष्क्रयो(१८) भविष्यति?। इत्यालोच्य सर्व्वे सर्व्वमङ्गलायतनं गताः। तत्र सर्व्वमङ्गलां संपूज्य वीरवरो ब्रूते, देवि, प्रसीद, विजयतां शूद्रको महाराजः, गृह्यतामयमुपहारः। इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद। ततो वीरवरश्चिन्तयामास, गृहीतराजवर्त्तनस्य निस्तारः कृतः, अधुना निष्पुत्रजीवनं विड़म्बनम्। इत्यालोच्य आत्मनः शिरश्चिच्छेद। ततः स्त्रियापि पतिपुत्रशोकार्त्तया तदनुष्ठितम्।

(१८, निष्क्रयः मूल्यं परिशोध इति यावत्।)

एतत् सर्व्वं श्रुत्वा दृष्ट्वा च राजा साश्चर्य्यं चिन्तयामास,

जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥

तदेतेन परित्यक्तस्य मम राज्येनापि किं प्रयोजनम् । ततः शूद्रकेणापि स्वशिरश्छेत्तुमुत्थापितः खड्गः । अथ भगवत्या सर्व्वमङ्गलया प्रत्यक्षभूतया राजा करे धृतः उक्तश्च, पुत्र, अलं साहसेन, प्रसन्नास्मि ते, इदानीं तव राज्यभङ्गो नास्ति । राजा साष्टाङ्गं प्रणम्योवाच, देवि न मे राज्येन जीवितेन वा प्रयोजनम् । यद्यहमनुकम्पनीयः तदा ममायुःशेषेणायं सदारपुत्रो राजपुत्रो जीवतु । अन्यथाहं यथाप्राप्तां गतिं गच्छामि । भगवत्युवाच, पुत्र, अनेन ते सत्त्वोत्कर्षेण(२९) भृत्यवात्सल्येन च सर्व्वथा सन्तुष्टास्मि, गच्छ विजयी भव । अयमपि सपरिवारो राजपुत्रो जीवतु । इत्युक्त्वा देव्यदृश्याभवत् । ततो वीरवरः सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः । राजापि तैरलक्षितः प्रासादपृष्ठं गत्वा तथैव सुप्तः ।

तत् किमागन्तुरेव विरुद्धः ? । तत्रापि उत्तमाधममध्यमाः सन्ति । चक्रवाको ब्रूते,

(२९) स्वभावोत्कर्षेण उत्कृष्टस्वभावतया ।

योऽकार्य्यं कार्य्यवत् शास्ति स किंमन्त्री नृपेच्छया ।
वरं स्वामिमनोदुःखं तन्नाशो न त्वकार्य्यतः ॥

शृणु देव,

पुण्याल्लब्धं यदेकेन तन्ममापि भविष्यति ।(४०)
हत्वा भिक्षुं यतो मोहात् निध्यर्थी नापितो मृतः ॥

राजा पृच्छति, कथमेतत् ? । मन्त्री कथयति । अस्त्ययोध्यायां पुरि चूड़ामणिर्नाम क्षत्रियः । तेन धनार्थिना महता क्लेशेन भगवान् चन्द्रार्द्धचूड़ामणिश्चिरमाराधितः । ततः क्षीणपापोऽसौ स्वप्ने दर्शनं लब्ध्वा भगवतः प्रसादात् यक्षेश्वरेणादिष्टः, "त्वमद्य प्रातरेव क्षौरं कारयित्वा लगुड़हस्तः सन् स्वगृहद्वारि निभृतं स्थास्यसि । ततो यमेव आगतं भिक्षुकं प्राङ्गणे पश्यसि, तं निर्द्दयं लगुड़प्रहारेण हनिष्यसि । ततोऽसौ भिक्षुस्तत्क्षणात् सुवर्णकलसो भविष्यति । तेन त्वं यावज्जीवं सुखी भविष्यसि ।" तदनन्तरं तथानुष्ठिते सति तद्वृत्तम् ।

ततः क्षौरकरणायानीतेन नापितेन तत् सर्व्वमालोक्य चिन्तितम्, अहो ! निधिप्राप्तेरयमुपायः ।

(४०) एकेन अपरेण जनेन पुण्यात् पुण्यबलात् यत् गर्भमिति शेषः, लब्धमधिगतं तत् ममापि भविष्यति मयाप्येऽपि फलिष्यतीति न विवेचनीयमिति शेषः ।

तदहमप्येवं किं न करोमि। ततः प्रभृति स नापितः प्रतिदिनं तथाविधो लगुडहस्तो भिक्षुकागमनमपेक्षते। एकदा, तेन तथा प्राप्तो भिक्षुको लगुडेन हत्वा व्यापादितः। तेनापराधेन सोऽपि नापितो राजपुरुषैस्ताडितः पञ्चत्वं गतः।

राजाह,

पुरावृत्तकथोद्गारैः (४१) कथं निर्णीयते परः।
स्यान्निष्कारणबन्धुर्वा किंवा विश्वासघातकः॥

यातु, प्रस्तुतमनुसन्धीयताम्। मलयपर्व्वताधित्यकायां समावासितकटको वर्त्तते चित्रवर्णः। तदधुना किं विधेयम्? मन्त्री वदति, देव, 'आगतप्रणिधिमुखाच्छ्रुतम्, यन्महामन्त्रिणो गृध्रस्य उपदेशे चित्रवर्णेनानादरः कृतः। अतोऽसौ मूढो जेतुं शक्यः। ततोऽसौ यावदस्मद्दुर्गद्वारावरोधनं न विदधाति, तावत् नद्यद्रिवनवर्त्मसु तद्बलानि हन्तुं सारसादयः सेनापतयो नियुज्यन्ताम्। अतस्तस्य प्रमादिनो बलं गत्वा यथावकाशं सारसादयो दिवानिशं निघ्नन्तु।

(४१) पुरा पूर्वं वृत्ताः भूताः कथाः प्राचीनेतिहासाः तासामुद्गारः उद्गरणैः कथनैरिति यावत्।

तथानुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह, तात, किमिति त्वया अस्मदुपेक्षा क्रियते ? किं क्वापि अस्मदविनयोऽस्ति ? तथाचोक्तम्,

दक्षः श्रियमधिगच्छति, पथ्याशी कल्यतां(४२), सुखमरोगी ।
उद्योगी विद्यान्तम्, धर्मार्थयशांसि च विनीतः ॥

गृध्रोऽवदत्, देव, श्रूयताम् । त्वया स्वबलोत्साहमवलोक्य साहसैकरसिकेन(४३) मदुपन्यस्तेष्वपि मन्त्रेषु अनवधानं वाक्पारुष्यञ्च(४४) कृतम् । अतो दुर्नीतेः फलमिदमनुभूयते । तथाचोक्तम्,

मृगं किरातः, शरदं हिमागमः,
तमो विवस्वान्, सुकृतं कृतघ्नता ।
प्रियोपपत्तिः(४५) शुचमापदं नयः,
श्रियं समृद्धामपि हन्ति दुर्नयः ॥

इत्युक्त्वा तेन मन्त्रिणा आलोचितम्, प्रज्ञाहीनोऽयं

(४२) निरामयत्वम् । "वार्तो निरामयः कल्यः" इत्यमरः ।

(४३) साहसे साहसकार्य्ये एकः मुख्यः रसिकः रसज्ञः तेन, सहसा अविमृश्यकार्य्यकारितायामेव नियुक्तेनेत्यर्थः ।

(४४) वाचा पारुष्यं कार्कश्यं, कटुभाषणरूपः साहसविशेषः ।

(४५) प्रियस्य इष्टवस्तुनः उपपत्तिः लाभः, प्रियवस्तुसङ्गतिरित्यर्थः ।

राजा, नो चेत् कथं नीतिशास्त्रकथाकौमुदीं वागुल्काभिस्तिमिरयति (४६)। यतः,

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्?।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति?॥

इत्यालोच्य तूष्णीं स्थितः। अथ राजा बद्धाञ्जलिराह, तात, अस्त्ययं ममापराधः, इदानीं यथाहम् अवशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश। गृध्रः स्वगतं चिन्तयति, कर्त्तव्योऽत्र प्रतीकारः, ब्रूते च, देव, मा भैषीः, समाश्वसिहि, तव प्रतापादेव दुर्गं भङ्क्त्वा कीर्त्तिप्रतापसहितं त्वाम् अचिरेणैव कालेन विन्ध्याद्रिं नयामि। राजाह, कथमधुना स्वल्पबलेन तत् सम्पद्यते?। गृध्रो वदति, देव, सर्वं भविष्यति। यतो विजिगीषोरदीर्घसूत्रता (४७) विजयसिद्धेरवश्यम्भावि लक्षणम्। तत् सहसैव दुर्गद्वारावरोधो विधीयताम्।

(४६) नीतिशास्त्रस्य कथा नीतिशास्त्रोक्तानुष्ठानस्योपन्यास इति यावत्, सैव कौमुदी ज्योत्स्ना ताम्। वाचः कटुभाषणानि ता एव उल्काः ज्वलदग्निशिखाः ताभिः तिमिरयति तिमिरितां करोति मलिनयतीत्यर्थः।

(४७) विजिगीषोर्विजेतुमभिलषतः राज्ञः अदीर्घसूत्रता क्षिप्रकारित्वमेव विजयसिद्धेः विजयलाभस्य अवश्यम्भावि लक्षणं चिह्नम्। क्षिप्रकारी विजिगीषुरवश्यमेव विजयते इति भावः।

अथ प्रणिधिना बकेनागत्य हिरण्यगर्भस्य कथितम्, देव, स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य वचनोपष्टम्भात्(४८) आगत्य दुर्गद्वारावरोधं करिष्यति। राजहंसो ब्रूते, भोः सर्व्वज्ञ, किमधुना विधेयम्?। चक्रवाक आह, स्वबले सारासार-विचारः क्रियताम्। ज्ञात्वा च सुवर्णवस्त्रादि-प्रसाददानं यथार्हं क्रियताम्। राजाह, कथमिह समये अतिव्ययो युज्यते? उक्तञ्च

आपदर्थे धनं रक्षेत्,

मन्त्री ब्रूते, श्रीमतामापदः कुतः।

राजाह, कदाचित् कुपिता लक्ष्मीः,

पुनर्मन्त्री ब्रूते, सञ्चितापि विनश्यति।

तद्देव, कार्पण्यं विमुच्य दानमानाभ्यां स्वभटाः पुरस्क्रियन्ताम्।

अत्रान्तरे मेघवर्ण आगत्य प्रणम्य ब्रूते, देव, दृष्टिप्रसादं(४९) कुरु। एष युद्धार्थी विपक्षो दुर्गद्वारि तिष्ठति। तद्देवपादादेशात् बहिर्निःसृत्य स्वविक्रमं

(४८) वचनोपष्टम्भात् वचनोपरोधात्। स्तम्भधातुः रोधनार्थकः।

(४९) दृष्ट्वा मां प्रति दृष्टिक्षेपेण प्रसादं मयि अनुग्रहम् दृष्टिसंबद्धप-सानुग्रहमित्यर्थः।

दर्शयामि। तेन देवप्रसादस्यानृण्यमुपगच्छामि ।(५०) चक्रवाको ब्रूते, मैवं, यदि वहिर्निःसृत्य योद्धव्यं, तदा दुर्गाश्रयणं निष्प्रयोजनम्। अपरञ्च,

विषमोऽपि यथा नक्रः सलिलान्निःसृतोऽवशः।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्यात् शृगालवत् ॥

वायसो ब्रूते, देव, स्वयं गत्वा युद्धं दृश्यताम्। यतः,

पुरस्कृत्य बलं राजा योधयेदवलोकयन्।
स्वामिनाधिष्ठितः श्वापि किं न सिंहायते ध्रुवम् ? ॥

अनन्तरं ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः। परेद्युश्चित्रवर्णो गृध्रमुवाच, तात, स्वप्रतिज्ञातमधुना विधीयताम्। गृध्रो ब्रूते, शृणु तावत्,

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम् (५१)
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे ॥

तत्र च यथाशक्ति क्रियते यत्नः। इति कर्णे कथयति।

ततोऽनुदित एव भास्करे चतुर्ष्वपि द्वारेषु युद्धे प्रवृत्ते दुर्गाभ्यन्तरे गृहे गृहे काकैरेकदा अग्नि-

(५०) देवेन मयि प्रसादप्रदर्शनात् अहं देवपादेषु ऋणी संवृत्तः, अधुना तु स्वाभिमतप्रकटनेन तदृणान्मोक्षमवाप्नोमीत्यर्थः।

(५१) उपजापः शत्रोरमात्यादिषु भेदः, चिरारोधः चिरं दीर्घकालं व्याप्य आरोधः सम्यगवरोधः, अवस्कन्दः हठादाक्रमणम्, तीव्रमसह्यं परपरिभावकं पौरुषं पराक्रमः

निक्षिप्तः। ततो गृहीतं दुर्गमिति कोलाहलं श्रुत्वा सर्व्वतः प्रदीप्तमग्निमवलोक्य राजहंस-सैनिकाः दुर्गवासिनश्च सत्वरं ह्रदं प्रविष्टाः। राजहंसस्तु स्वभावान्मन्दगतिः सारसद्वितीयः चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः। हिरण्यगर्भः सारसमाह, सेनापते सारस, ममानुरोधादात्मानं कथं व्यापादयिष्यसि? अधुनाहं गन्तुमसमर्थः, त्वन्तु गन्तुं समर्थः। तत् सत्वरं गत्वा जलं प्रविश्य आत्मानं परिरक्ष। अस्मत्पुत्रं चूड़ामणि-नामानं सर्व्वज्ञसम्मत्या(५२) राजानं करिष्यसि। सारसो ब्रूते, देव, न वक्तव्यमेवं दुःसहं वचः, यावत् चन्द्रार्कौ दिवि तिष्ठतः, तावद्विजयतां देवः। अहं देवदुर्गाधिकारी, मन्मांसासृग्-लिप्तेन द्वारवर्त्मना तावत् प्रविशतु शत्रुः। अपरञ्च,

दाता क्षमी गुणग्राही स्वामी भाग्येन लभ्यते।

राजाह, अस्त्येवं, किन्तु,

शुचिर्दक्षोऽनुरक्तश्च भृत्यः खलु सुदुर्लभः॥

सारसो ब्रूते, देव, त्वं हि स्वामी सर्व्वथा रक्षणीयः। अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खर-

(५२) सर्व्वज्ञस्य मन्त्रिणश्चक्रवाकस्य सम्मत्या सम्मतिं गृहीत्वेत्यर्थः।

तर-नखराघातः कृतः । ततः सत्वरमुपसृत्य सारसेन स्वाङ्गेनाच्छाद्य राजा जले प्रक्षिप्तः । कुक्कुटोऽपि तेन सारसेन चञ्चुप्रहारैर्व्यापादितः । पश्चात् बहुभिः पक्षिभिः सम्भूय चञ्चुप्रहारेण निर्भिद्य सारसोऽपि निहतः । अत्र राजहंसबले स एव हि पुण्यवान्, येन स्वदेहदानेन स्वामी रक्षितः । उक्तञ्च,

> आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
> भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥

अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा वन्दिभिर्जयशब्देनानन्दितः स्वस्कन्धावारं(५३) जगाम ।

ततस्तेन राजहंसेनोक्तम्, केनास्मद्दुर्गे निक्षिप्तोऽग्निः ? किं पारक्येण(५४) अथवा अस्मद्दुर्गवासिना केनचित् विपक्ष-प्रयुक्तेन ? चक्रवाको वदति, देव, भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो नात्रावलोक्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् ।

(५३) निजपटवासम् । स्कन्धं नृपतिम् आवृणोति आच्छादयतीति व्युत्पत्या साधुः । "स्कन्धः स्यान्नृपती" इति मेदिनी ।

(५४) परकसम्बन्धीयेन शत्रुपक्षीयेण परकीयेणेति यावत् ।

राजा क्षणं विचिन्त्याह, अस्ति तावदेवं, मम दुर्भाग्यमेतत्। तथाचोक्तम्

अपराधः स दैवस्य, न पुनर्मन्त्रिणामयम्।
कार्य्यं सुघटितं क्वापि यदि दैवात् विनश्यति॥

मन्त्री ब्रूते, उक्तमेवैतत्,

विषमां हि दशां प्राप्य दैवं गर्हयते(५५) नरः।
आत्मनः कर्म्मदोषांश्च नैव जानात्यपण्डितः॥
सुहृदां हितकामानां यो वाक्यं नाभिनन्दति।
स कूर्म्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति॥

राजाह, कथमेतत्?। मन्त्री कथयति। अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः। तत्र चिरात् सङ्कट-विकट-नामानौ हंसौ निवसतः। तयोर्मित्रं कम्बुग्रीवनामा कूर्म्मः प्रतिवसति। अथैकदा धीवरैरागत्य तत्रोक्तम्, यदत्रास्माभि-रद्य उषित्वा प्रातर्मत्स्यकूर्म्मादयो व्यापादयितव्याः। तदाकर्ण्य कूर्म्मो हंसावाह, सुहृदौ, श्रुतोऽयं धीवरालापः? अधुना किं मया कर्त्तव्यम्? हंसावाहतुः, ज्ञायतां तावत्, प्रभाते यदुचितं तत् कर्त्तव्यम्। कूर्म्मो ब्रूते, मैवम्;

(५५) महाकविप्रयोगात् आत्मनेपदम्।

यथाहमप्येव अन्यं ह्रदं प्राप्नोमि, तद्विधीयताम्। हंसावाहतुः, जलाशयान्तरे प्राप्ते तव कुशलं, स्थले गच्छतस्ते को विधिः(५६) ?। कूर्मो ब्रूते, यथाहं भवद्भ्यां सह आकाशवर्त्मना यामि, स उपायो विधीयताम्। हंसौ ब्रूतः, कथमुपायः सम्भवति ?। कच्छपो वदति, युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेन अवलम्बितव्यम्। ततो युवयोः पक्षबलेन मयापि सुखेन गन्तव्यम्। हंसौ ब्रूतः, सम्भवत्येष उपायः। किन्तु,

उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत्।
पश्यतो वकमूर्खस्य नकुलैर्भक्षिताः सुताः॥

कूर्मः पृच्छति, कथमेतत् ?। हंसौ कथयतः। अस्त्युत्तरापथे गृध्रकूटनाम्नि पर्व्वते महान् न्यग्रोधवृक्षः(५७)। तत्र वका निवसन्ति। तस्य वटस्याधस्तात् विवरे सर्पस्तिष्ठति। सच वकानां बालापत्यानि खादति। अथ शोकार्त्तानां वकानां विलापं श्रुत्वा केनचित् वृद्धवकेनाभिहितम्, भो एवं कुरुत यूयम्,

(५६) विधिः विधानं कार्य्यमुपाय इति यावत्।
(५७) वटपादपः। "न्यग्रोधो बहुपाद् वटः" इत्यमरः।

मत्स्यानानीय नकुलविवरादारभ्य सर्पविवरं यावत् पङ्क्तिक्रमेण एकैकशो मत्स्यान् विकिरत । तत-स्तदाहारलुब्धेन नकुलेनागत्य सर्पो द्रष्टव्यः, स्वभाव-द्वेषात् व्यापादयितव्यश्च । ततस्तथानुष्ठिते तद्-वृत्तम् । ततस्तत्र वृक्षे नकुलेन वकशावकरावः श्रुतः । पश्चादसौ वृक्षमारुह्य वकशावकान् खादति स्म ।

आवाभ्यां नीयमानं त्वां दृष्ट्वा लोकैः किञ्चिद्-वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं ददासि, तदा तव मरणं भविष्यति । तत् सर्व्वथा अत्रैव स्थीय-ताम् । कूर्म्मो वदति, तत् किमहमज्ञः ? न किमपि मया वक्तव्यम् । ततस्तथानुष्ठिते, आकाशे नीयमानं तं कूर्म्ममालोक्य सर्व्वे गोरक्षकाः पश्चा-द्धावन्ति, वदन्ति च, अहो महदाश्चर्य्यम ! पक्षिभ्यां कूर्म्मः समुन्नीतः । तत्र कश्चिदाह, यद्ययं पतति, तदा अत्रैव पक्त्वा खादितव्यः; कोऽपि वदति, गृहं नेतव्यः; कश्चिद्वदति, सरसः समीपे दग्ध्वा भक्षयितव्यः । तानि परुषवचनान्याकर्ण्य स क्रोधात् विस्मृतसङ्केतः(५८) अवदत्, युष्माभि र्भस्म भक्षयितव्यम् । इति वदन्नेव काष्ठात् पतितो गोरक्षकैर्व्यापादितः ।

(५८) विस्मृतपूर्व्वप्रतिज्ञः, विस्मृतपूर्व्वनियम इति यावत् ।

अथ प्रणिधिर्बकस्तत्रागत्य उवाच, देव, प्रागेव मया निवेदितम्—दुर्ग-शोधनं प्रतिक्षणं कर्त्तव्यमिति । तच्च युष्माभि र्न कृतम् । अतस्तदनवधानस्य फलमिदमनुभूतम् । दुर्गदाहस्य मेघवर्णनाम्ना वायसेन गृध्रप्रयुक्तेन कृतः । राजा निश्वस्याह,

प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते ॥

अथ प्रणिधिरुवाच, इतो दुर्गदाहं विधाय यदा गतो मेघवर्णः, तदा चित्रवर्णेन प्रसादितेनोक्तम्, अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्ये अभिषिच्यताम् । चक्रवाको ब्रूते, देव, श्रुतं यत् प्रणिधिः कथयति ? राजाह, ततस्ततः ? प्रणिधिरुवाच, ततः प्रधानमन्त्रिणा गृध्रेणोक्तम्, देव, नैतदुचितम्, प्रसादान्तरं किमपि क्रियताम् । यतः

अविचारयतो युक्तिः कथनं तस्यापि खण्डनम् ।
नीचेषूपकृतं राजन्, वालुकास्विव मुद्रितम् ॥ (५१)

महतामास्पदे नीचः कदापि न कर्त्तव्यः । तथाचोक्तम्

(५१) वालुकासु मुद्राङ्कनं यथा क्षणस्थायि तथा नीचेषु उपकृतम् उपकारः अचिरादेव विलुप्यतीत्यर्थः ।

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा॥

चित्रवर्णः पृच्छति, कथमेतत्? गृध्रः कथयति। अस्ति गौतमारण्ये महातपा नाम मुनिः। तेनाश्रमसन्निधाने मूषिकशावकः काकमुखाद् भ्रष्टो दृष्टः। ततो दयायुक्तेन तेन मुनिना नीवारकणैः(६०) संवर्द्धितः। कदाचित् तञ्च मूषिकं खादितुमनुधावन् विड़ालो मुनिना दृष्टः। पश्चात् तपःप्रभावात् तेन मुनिना मूषिको विड़ालः कृतः। ततः स विड़ालः कुक्कुरं दृष्ट्वा पलायते। ततो मुनिनोक्तम्, कुक्कुरात् बिभेषि? त्वमेव कुक्कुरो भव। स च कुक्कुरत्वमापन्नो व्याघ्रात् बिभेति। ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः। अथ तं व्याघ्रं मुनिर्मूषिकोऽयमिति पश्यति। अथ सर्व्वे जनास्तं व्याघ्रं मुनिञ्च दृष्ट्वा वदन्ति—अनेन मुनिना मूषिको व्याघ्रतां नीतः। तच्छ्रुत्वा स व्याघ्रः सव्यथोऽचिन्तयत्, यावदनेन मुनिना जीवितव्यम्, तावदिदं मम स्वरूपाख्यानम् अकीर्त्तिकरं न

(६०) नीवाराणां तृणधान्यानां (उड़िधान इति भाषा) कणैः शस्यांशैः।

पलायिष्यते(६१)। इत्यालोच्य मुनिं हन्तुं समुद्यतः। मुनिनापि तस्य चिकीर्षितं ज्ञात्वा "पुनर्मूषिको भव" इत्युक्त्वा मूषिक एव कृतः।

ततः पुनरपि राजा स चित्रवर्णोऽवदत्, शृणु तावन्मन्त्रिन्, मयैतदालोचितम्, यदत्रावस्थितेनानेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि, तावन्त्यस्माकमुपनेतव्यानि। तेनास्माभिर्महता विलासेन विन्ध्याचले स्थातव्यम्। दूरदर्शी विहस्याह, देव,

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति।
स तिरस्कारमाप्नोति ——————॥

ततो राजा रहसि गृध्रमुवाच, तात, यथा कर्त्तव्यं तथोपदिश। गृध्रो वदति,

मदोद्धतस्य नृपतेः प्रकीर्णस्येव दन्तिनः।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम्॥(६२)

(६१) मम प्रकृतरूपात्कथमप्ययमस्करं नापगमिष्यतीत्यर्थः।

(६२) प्रकीर्णस्य दुर्विनीतस्य उच्छृङ्खलस्येति यावत्, दन्तिनः करिण इव, मदेन दर्पेण उद्धतस्य उत्सिक्तस्य तथा उन्मार्गयातस्य उत्पथप्रस्थितस्य नृपतेः राज्ञः नेतारः उपदेष्टारोऽमात्याः, दन्तिपक्षे हस्तिपकाश्च, वाच्यतां निन्दनीयतां गच्छन्ति प्राप्नुवन्ति, नृपतिं दन्तिनञ्च सत्पथमानेतुमशक्तत्वात् निन्दनीया भवन्तीत्यर्थः।

शृणु तावद्देव, किमस्माभिर्बलदर्पात् दुर्गं भग्नम्? किं वा भवतः प्रतापाधिष्ठितेनोपायेन? राजाह, भवतामुपायेन। गृध्रो ब्रूते, यद्यस्मद्वचनं क्रियते, तदा स्वदेशो गम्यताम्। अन्यथा आसन्ने वर्षाकाले तुल्यबलेन सह पुनर्विग्रहे सति अस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति। अतः सुखशोभार्थं(६३) सन्धाय गम्यताम्। दुर्गं भग्नं, कीर्त्तिश्च लब्धैव। मम सम्मतं तावदेतत्। यतः

यो हि धर्म्मं पुरस्कृत्य हित्वा भर्त्तुः प्रियाप्रियम्।
अप्रियाण्याह तथ्यानि(६४) तेन राजा सहायवान्॥

राजाह, तात, किं प्रागेव नेदमुपदिष्टम्? मन्त्री ब्रूते, तदा मम वचनं किमवसानपर्य्यन्तं श्रुतं भवद्भिः? तदापि मम सम्मत्या नायं विग्रहारम्भः। यतः सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथाचोक्तम्

(६३) सन्धिकरणे अस्माकं सुखं शुतिश्च वर्द्धिष्यते इत्यर्थः।

(६४) तथ्यानि सत्यानि। "नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः" इति किरातार्ज्जुनीयम्।

सत्यार्य्यौ धार्म्मिकोऽनार्य्यो भ्रातृसङ्घातवान् बली ।
अनेकयुद्धविजयी सन्धेयाः सप्त कीर्त्तिताः ॥(६५)

तदत्र बहुभिर्गुणैरुपेतः सन्धेयोऽयं राजहंसः ।

चक्रवाकोऽब्रवीत्, प्रणिधे, सर्व्वमवगतम्; व्रज, पुनरागमिष्यसि । ततो राजानमाह, देव, यद्यपि महामन्त्रिणा गृध्रेण सन्धानमुपन्यस्तं, तथापि तेन राज्ञा भूतजयदर्पान्न मन्तव्यम्(६६)। देव, तदेवं क्रियताम्,—अस्मन्मित्रं सिंहलद्वीपस्य महाबलो नाम सारसो राजा जम्बुद्वीपे कोपं जनयतु(६७)। राजाह, एवमस्तु। इत्युक्त्वा विचित्रो नाम वकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रस्थापितः।

अथ प्रणिधिः पुनरागत्य उक्तवान्, देव, श्रूयतां तावत् तत्रत्यः प्रस्तावः। एवं तत्र गृध्रेणा-

(६५) सत्यः सन्धिसम्भवात् परं सत्यमनुपालयन् यो विकारं न भजते। आर्य्यः प्राणात्ययेऽपि अनार्य्यतानवलम्बी। धार्म्मिकः प्रजानुरागधर्म्मनिरतः। अनार्य्यः—नीचः, असाधुः। भ्रातृसङ्घातवान्—भ्रातृगणसहायः। बली—करिहरिवत् समबलः, मृगसिंहवत् बलवत्तरो वा।—कामन्दकीय नीतिसारे नवमसर्गे ४२-५२ श्लोकाः द्रष्टव्याः।

(६६) पूजितव्यं सम्मानितव्यं वाऽयमिति यावत्।

(६७) विद्रोहादिना प्रकृतिक्षोभं समुत्पादयतु।

आम,—देव, मेघवर्णस्तत्र चिरमुषितः, स वेत्ति किं सन्धेयगुणयुक्तो हिरण्यगर्भो न वेति। ततोऽसौ राज्ञा समाहूय पृष्टः—वायस, कीदृशोऽसौ हिरण्यगर्भः? चक्रवाको मन्त्री वा कीदृशः? मेघवर्णो ब्रूते, देव, स हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः सत्यवाक्। चक्रवाकसदृशो मन्त्री न क्वाप्यवलोक्यते। राजाह, यद्येवं, तदा कथमसौ वञ्चितः? मेघवर्णो विहस्य प्राह, देव,

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम्॥

शृणु देव, तेन मन्त्रिणा अहं प्रथमदर्शन एव ज्ञातः। किन्तु महाशयोऽसौ राजा, तेन मया विप्रलब्धः।

राजाह, मेघवर्ण, कथं त्वया शत्रुमध्ये सुचिरमुषितम्? कथं वा तेषामनुनयः कृतः? मेघवर्ण उवाच, देव, स्वामिकार्य्यार्थिना स्वप्रयोजनवशात् वा किं न क्रियते, पश्य

स्कन्धेनापि वहेच्छत्रून् कार्य्यमासाद्य बुद्धिमान्।(६८)

(६८) कामन्दकीये नीतिसारे तु श्लोकोऽयमन्यविधो दृश्यते। 'कालं सहिष्णुर्गिरिवदसहिष्णुश्च वह्निवत्। स्कन्धेनापि वहेच्छत्रून् प्रियाणि समुदाहरन्॥' १०सर्गः, ३६श्लोकः।

किं बहुना, देव, सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा, सन्धीयतामिति मे मतिः।

राजोवाच, कोऽयं भवतो विचारः! यतो जितस्तावदयमस्माभिः, ततो यद्यस्मदाज्ञया सेवायां वर्तते, तदास्ताम्, नो चेत् विगृह्यताम्।(६९)

अत्रान्तरे जम्बुद्वीपादागत्य शुकेनोक्तम्, देव, सिंहलद्वीपस्य सारसो राजा सम्प्रति जम्बुद्वीपमाक्रम्य अधितिष्ठति। राजा तं ससम्भ्रममाह, किं किम्? शुकः पूर्वोक्तं कथयति। गृध्रः स्वगत(७०)मुवाच, साधु रे चक्रवाक मन्त्रिन् साधु! राजा सकोपमाह, आस्तां तावदयं, तमेव गत्वा समूलमुन्मूलयामि। दूरदर्शी विहस्याह,

एकदा न विगृह्णीयात् बहून् राजा विवादिनः।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम्॥

देव, किमितो विना सन्धानं गमनमस्ति? यतोऽस्माकं पश्चात् प्रकोपोऽनेन कर्त्तव्यः।(७१) अपरञ्च

---

(६९) यदि अस्मदादेशेन अस्मत्परिचर्य्यायां किङ्करवत् नियुक्तो भवति तदा सन्धेय आस्ताम्, असाविति शेषः। अन्यथा विग्रहः क्रियतां युध्यतां तेनेति शेषः।

(७०) स्वगतमात्मगतं यथा तथा, स्वमनसि, अन्यैरश्रुतमित्यर्थः।

(७१) अनेन हिरण्यगर्भेण अस्मद्बलस्य पश्चादागत्य प्रकोपः सेनासंक्षोभः, उत्सादनमिति यावत्, कर्त्तव्यः अवश्यमेव करिष्यते इत्यर्थः।

योऽर्थतत्त्व(७२)मविज्ञाय क्रोधस्यैव वशं गतः ।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद् यथा ॥

राजा पृच्छति, कथमेतत् ? दूरदर्शी कथयति । अस्त्युज्जयिन्यां माधवो नाम ब्राह्मणः । एकदा तस्य ब्राह्मणी बालापत्यरक्षार्थं तमवस्थाप्य स्नातुं गता । अथ ब्राह्मणाय राज्ञः पार्व्वणश्राद्धं दातुमाह्वानमागतम् । तच्छ्रुत्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्, यदि सत्वरं न गच्छामि तदा अन्यः कश्चित् श्रुत्वा श्राद्धं ग्रहीष्यति, शिशोश्चात्र रक्षकः कोऽपि नास्ति, तत् किं करोमि । भवतु, चिरकालपालितमिमं सुतनिर्व्विशेषं(७३) नकुलं बालकरक्षार्थं व्यवस्थाप्य गच्छामि । तथा कृत्वा गतः । ततस्तत्र नकुलेन बालकसमीपमागच्छन् कृष्णसर्पो दृष्ट्वा व्यापादितः खण्डशः कृतश्च । अथासौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपगम्य तच्चरणयोर्लुलोठ । ततोऽसौ ब्राह्मणस्तं तथाविधं दृष्ट्वा, मम पुत्रोऽनेन भक्षित इत्यवधार्य्य, तं व्यापा-

(७२) अर्थस्य क्रोधविषयीभूतवस्तुनः तत्त्वं याथार्थ्यं स्वरूपमिति यावत् । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ।

(७३) सुतात् नास्ति विशेषो यस्य स तम्, पुत्रतुल्यमिति यावत् ।

दिनवान्। अनन्तरं यावदुपसृत्य पश्यति ब्राह्मणः, तावद्बालकः सुस्थः स्वपिति, सर्पस्तु व्यापादितस्तिष्ठति, ततोऽसौ ब्राह्मणः परं विषादमुपगतः।

राजाह, मन्त्रिन्, एष ते निश्चयः? मन्त्री ब्रूते, एवमेव। तद्देव, यदीदानीमस्मद्वचनं क्रियते, तदा सन्धाय गम्यताम्। राजाह, कथमेवं सत्वरं सम्भाव्यते? मन्त्री ब्रूते, देव, सत्वरं भविष्यति। यतः

मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्ज्जनो भवति।
सुजनस्तु कनकघटवत् दुर्भेद्यश्चाशु सन्धेयः॥

विशेषतश्चासौ धर्म्मज्ञो राजा, सर्व्वज्ञो मन्त्री च। ज्ञातमेतन्मया पूर्व्वं मेघवर्णवचनात् तत्कृत-कार्य्य-सन्दर्शनाच्च(७४)। राजाह, अलमुत्तरोत्तरेण; यथाभिप्रेतमनुष्ठीयताम्। एतन्मन्त्रयित्वा गृध्रो महामन्त्री 'तत्र यथार्हं कर्त्तव्यम्' इत्युक्त्वा दुर्गाभ्यन्तरं चलितः।

ततः प्रणिधिवकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्, देव, सन्धिं कर्त्तुं महामन्त्री गृध्रो-

(७४) मेघवर्णाश्रयदानं हिरण्यगर्भस्य धर्म्मज्ञत्वसूचकम्। जम्बुद्वीपाक्रमणाय चित्रराजस्य सारसस्य प्रेषणं चक्रवाकस्य सर्व्वज्ञत्वसूचकम्।

ऽस्मत्समीपमागच्छति। राजहंसो ब्रूते, मन्त्रिन्, पुनः सम्बन्धिना(७५) केनचिदत्रागन्तव्यम्। सर्व्वज्ञो विहस्याह, देव, न शङ्कास्पदमेतत्, यतो महाशयोऽसौ दूरदर्शी। अथवा स्थितिरियं(७६) मन्दमतीनाम्, कदाचित् शङ्कैव न क्रियते, कदाचित् सर्व्वशङ्का। तत् देव, यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सज्जीक्रियताम्।

तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वारात् चक्रवाकेण सत्कृत्यानीय राजदर्शनं कारितो दत्तासने चोपवेशितः। चक्रवाक उवाच, मन्त्रिन्, युष्मदायत्तं सर्व्वम्, स्वेच्छयोपभुज्यतामिदं राज्यम्। राजहंसो ब्रूते, एवमेव। दूरदर्शी ब्रूते, एवमेवैतत्, किन्त्विदानीं बहु प्रपञ्चनं(७७) निष्प्रयोजनम्। तदिदानीं सन्धाय गम्यताम्। महाप्रतापश्चित्रवर्णो राजा।

चक्रवाको ब्रूते, यथा सन्धानं कार्य्यं तदप्युच्यताम्। राजहंसो ब्रूते, भवन्तो महापण्डिताः,

(७५) सम्बन्धः शत्रुणा सह संसर्गः सख्यमिति, शत्रुपक्षीयेणेत्यर्थः।

(७६) स्थितिः स्थिरता, अवधारणमिति यावत्।

(७७) प्रपञ्चनं वाक्यवाक्यविस्तरः।

तदत्रास्माकं यथा कर्त्तव्यमुपदिश्यताम्। दूरदर्शी ब्रूते, अत्र सत्याभिधान-दिव्यपुरःसरो(७८) द्वयोरप्येतयोर्भूपालयोः काञ्चनाभिधान(७९) सन्धिर्विधीयताम्। सर्व्वज्ञो वदति, एवमस्तु।

ततो वस्त्रोपहारादिना स मन्त्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य समीपं गतः। तत्र चित्रवर्णेन राज्ञा सर्व्वज्ञो गृध्रवचनात् बहुमानदानपुरःसरं सम्भाषितः, तथाविधं सन्धिं स्वीकृत्य राजहंससमीपं प्रस्थापितः।

दूरदर्शी ब्रूते, देव, सिद्धं नः समीहितम्, इदानीं स्वस्थानमेव विन्ध्याचलं प्रतियातु भवान्। अथ सर्व्वे स्वस्थानं प्राप्य मनोवाञ्छितफलमनुभवन्ति।

---

(७८) सत्याख्यानशपथपूर्व्वकः।

(७९) काञ्चनवत् दुर्भेद्यत्वात् सन्धिरयं काञ्चन इत्युच्यते। तथाचोक्तं कामन्दकीये नीतिसारे—"यावदायुःप्रमाणस्तु समानार्थप्रयोजनः। सम्पत्तौ च विपत्तौ च कारणैर्यो न भिद्यते। सङ्गतः सन्धिरेवैष प्रकृष्टत्वात् सुवर्णवत्। सोऽपरैः सन्धिकुशलैः काञ्चनः परिकीर्त्तितः॥" ९सर्गः, ७ ८ श्लोकौ।

# संस्कृत-पाठः ।



## द्वितीयः परिच्छेदः ।

### पद्यकाव्यानि ।



"ज्ञानात् परतरं नहि" ।

"पुत्रः शत्रुरपण्डितः" ।

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्म्ममाचरेत् ॥
संसारविषवृक्षस्य द्वे फले अमृतोपमे ।
काव्यामृतरसास्वादः आलापः सज्जनैः सह ॥
सर्व्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्(१) ।
अहार्य्यत्वादनर्घ्यत्वा-दक्षयत्वाच्च सर्व्वदा ॥
विद्या ददाति विनयं, विनयाद् याति पात्रताम्(२)।
पात्रत्वात् धनमाप्नोति, धनाद्धर्मं, ततः सुखम् ॥

---

(१) नास्ति उत्तमं यस्मात् अत्युत्कृष्टमिति यावत्।

(२) पात्रतां कार्य्यकुशलतां कर्म्मनैपुण्यमिति यावत् ।

विद्या शस्त्रञ्च शास्त्रञ्च, द्वे विद्ये प्रतिपत्तये।
आद्या हास्याय वृद्धत्वे, द्वितीयाद्रियते सदा॥
अनेकसंशयोच्छेदि परोक्षार्थस्य(३) दर्शकम्।
सर्व्वस्य लोचनं शास्त्रं, यस्य नास्त्यन्ध एव सः॥
कोऽर्थः पुत्त्रेण जातेन, यो न विद्वान् न धार्म्मिकः।
काणेन चक्षुषा किं वा, चक्षुःपीड़ैव केवलम्॥
अजात-मृत-मूर्खाणां वरमाद्यौ न चान्तिमः।
सकृद्दुःखकरावाद्यौ, अन्तिमस्तु पदे पदे॥
काचः काञ्चनसंसर्गात् धत्ते मारकतीं(४) द्युतिम्।
तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम्(५)।
कीटोऽपि सुमनःसङ्गात्(६) आरोहति सतां शिरः।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः॥
काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन च॥

विष्णुशर्म्मसङ्कलितो हितोपदेशः।

---

(३) अप्रत्यक्षविषयस्य। चक्षुर्हि प्रत्यक्षवस्तुन एव दर्शकम्, शास्त्रचक्षुस्तु अप्रत्यक्षमपि विषयं दर्शयति इत्यर्थः।

(४) मरकतमणिसम्बन्धिनीं हरिन्मणिनिभामित्यर्थः।

(५) पटुतां विज्ञतामिति यावत्।

(६) सुमनःसङ्गात् कुसुमसाहचर्य्यात्।

विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा, विद्वान् सर्व्वत्र पूज्यते ॥
पण्डिते च गुणाः सर्व्वे, मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते(७) ॥
किं कुलेन विशालेन गुणहीनस्तु यो नरः ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि(८) पूज्यते ॥
रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं स्याद्वनं सर्व्वं सुपुत्रेण कुलं यथा ॥
यस्मिन् देशे न सम्मानो न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चित्, तं देशं परिवर्जयेत् ॥
न च विद्यासमो बन्धुः, न च व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहः(९) न च दैवात् परं बलम् ॥
प्रथमे(१०) नार्जिता विद्या, द्वितीये नार्जितं धनम् ।
तृतीये नार्जितं पुण्यं, चतुर्थे किं करिष्यति ॥

चाणक्यप्रणीतं शतकम् ।

---

(७) विशिष्टत्वेन विलक्षणत्वेन गण्यते ।
(८) देवताभिरपि । "दैवतानि पुंसि वा देवता स्त्रियाम्" इत्यमरः ।
(९) स्नेहयतीति स्नेहः स्निग्धकारकः पदार्थः ।
(१०) वयसीति शेषः । बाल्ययौवनप्रौढत्ववृद्धत्वैर्जीवितं चतुर्धा विभक्तम् ।

## नीति-विषयः।

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः।
नास्त्युद्यमसमो बन्धुः कृत्वा यन्नावसीदति(११)॥

वरं गहनदुर्गेषु भ्रान्तं(१२) वनचरैः सह।
न मूर्खजनसंसर्गः सुरेन्द्रभवनेष्वपि॥

पतितोऽपि कराघातै-रुत्पतत्येव कन्दुकः।
प्रायेण साधुवृत्तीना-मस्थायिन्यो विपत्तयः॥

छिन्नोऽपि रोहति तरुः, क्षीणोऽप्युपचीयते पुनश्चन्द्रः।
इति विमृशन्तः(१३) सन्तः सन्तप्यन्ते न ते विपदा॥

कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः।
सर्वलोकस्य वा मूर्ध्नि, विशीर्य्येत वनेऽथवा॥

जाड्यं धियो हरति, सिञ्चति वाचि सत्यं,
मानोन्नतिं दिशति, पापमपाकरोति।
चेतः प्रसादयति, दिक्षु तनोति कीर्त्तिं,
सत्सङ्गतिः कथय किं न करोति पुंसाम्?॥

---

(११) यम् उद्यम कृत्वा न अवसीदति मनुष्य इति शेषः। उद्यमे कृते न कोऽपि अवसन्नो भवतीत्यर्थः।

(१२) भ्रान्तं भ्रमणं, भ्रमधातोर्भावविहितक्तप्रत्ययेन सिद्धम्।

(१३) विमृशन्तः विवेचयन्तः।

पापान्निवारयति, योजयते हिताय,
गुह्यानि गूहति, गुणान् प्रकटीकरोति ।
आपद्गतञ्च न जहाति, ददाति काले(१४),
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥

मृग-मीन-सज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धक धीवर-पिशुना निष्कारणवैरिणो जगति ॥

यस्यास्ति वित्तं स नरः कुलीनः,
स एव वक्ता, स च दर्शनीयः ।
स पण्डितः, स श्रुतवान् गुणज्ञः,
सर्व्वे गुणाः काञ्चनमाश्रयन्ति ॥

न कश्चिच्चण्डकोपाना-मात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः ॥

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ? ॥

को न याति वशं लोके मुखे पिण्डेन(१५) पूरितः ? ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥

भर्त्तृहरिप्रणीतं नीति-शतकम् ।

---

(१४) काले उचितसमये ददाति साहाय्यं धनं वा इत्यर्थः ।

(१५) आस्यपूरक भक्तपिण्डेन आजीवनेनेति यावत् । मृदङ्गपक्षे पिण्डी-कृतेन गोधूमचूर्णादिना इत्यर्थः ।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि तु यस्य मानसं
कथं जनस्तं परितोषयिष्यति ॥
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥

घटकर्परचिता नीतिसारः ।

दृष्टान्त-माला ।

दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् ।
मलिनीकुरुते धूमः सर्व्वथा विमलाम्बरम् ॥
ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः ।
कवलीकुरुते स्वस्थं(१६) विधुं दिवि विधुन्तुदः ॥
निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ ।
खे भूतिं(१७) यस्त्यजेदुच्चै-र्मूर्द्ध्नि तस्यैव सा पतेत् ॥
शोभते विदुषां मध्ये नैव निर्गुणमानवः ।
अन्तरे तमसां दीपः शोभते नार्क-तेजसाम् ॥

(१६) स्वस्थं सुस्थितं सम्पूर्णमण्डलमिति यावत् ।
(१७) खं आकाशे, भूतिं भस्म । "भूतिर्भस्मनि सम्पदि" इत्यमरः ।

सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्राय-स्तनुते दिक्षु मारुतः ॥१७॥
स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु(१८) काकसम्पर्कतः पिकाः ॥
स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम्(१९) ॥
स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।
मुक्तारत्नस्य शाणाश्म-घर्षणं नोपयुज्यते ॥
गुणेन स्पृहणीयः स्या-न्न रूपेण युतो नरः ।
सौगन्ध्यहीनं नादेयं पुष्पं कान्तमपि क्वचित् ॥
उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः ।
मणिरेव महाशाण-घर्षणं न तु मृत्कणः ॥
गुणानामन्तरं प्रायस्तज्ज्ञो(२०) जानाति नेतरः ।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ।
उपकर्त्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥

---

(१८) मञ्जु श्रवणमधुरम् ।

(१९) प्रकृतावस्थायां यादृक् सौरभं, वह्निदाहे ततोऽधिकतरं भवतीति 'लभतेतराम्'प्रयोगः ।

(२०) तज्ज्ञः गुणान्तरज्ञः गुणज्ञ इति यावत् ।

व्यसनानन्तरं सौख्यं(२१) स्वल्पमप्यधिकं भवेत् ।
काषायरसमास्वाद्य स्वाद्वतीवाम्बु विन्दते ॥
न लभन्ते विनोद्योगं जन्तवः सम्पदां पदम् ।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥
कार्य्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम् ।
लोमार्थी शौनिकः(२२) शस्यैर्मेषं पुष्णाति पेशलैः ॥
भोगः परोपतापेन पुंसां दुःखाय कल्पते ।
पानमय्यसृजः क्षिप्रं सपीडायै जलौकसाम् ॥
गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् ।
स्फाटिकं भाजनं भग्नं काकिन्यापि(२३) न गृह्यते ॥
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् ।
श्येनो विहङ्गमानेव छिनत्ति न भुजङ्गमान् ॥
महतां तादृशं तेजो यत्र शाम्यन्त्यनोजसः ।(२४)
अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥

कुसुमदेवरचितं दृष्टान्तशतकम् ।

---

(२१) सौख्यं सुखानां समूहः सन्तानो वा, सुखधारा इति यावत् ।

(२२) शूना वधस्थानं, साऽस्यास्तीति शौनिकः पशुपक्षिघातकः तन्मांसविक्रेता च ।

(२३) कपर्द्दकेनापि, पणचतुर्थांशेनापि वा ।

(२४) यत्र तेजसि अनोजसः निस्तेजस्का नीचा इति यावत्, शाम्यन्ति निर्व्वाणा भवन्ति, पराभूता भवन्तीत्यर्थः ।

"असारः खलु संसारः ।"

अर्थमनर्थं भावय नित्यं,
नास्ति ततः(२५) सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः(२६)
सर्व्वत्रैषा कथिता नीतिः ॥
मा कुरु धनजनयौवनगर्व्वं
हरति निमेषात् कालः सर्व्वम् ।
मायामयमिदमखिलं हित्वा
ब्रह्मपदं प्रविशाशु विदित्वा ॥
तत्त्वं चिन्तय सततं चित्ते,
परिहर चिन्तां नश्वरवित्ते ।
क्षणमिह सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥
का तव कान्ता, कस्ते पुत्रः,
संसारोऽयमतीव विचित्रः ।
कस्य त्वं वा, कुत आयातः,
तत्त्वं चिन्तय तदिदं भ्रातः ॥

---

(२५) ततः तेन तस्मात् वा ।

(२६) "पुत्रादपि धनभाजां भीतिः" इत्यस्य यथार्थमितरेष्वपि सर्व्वत्रो-दाहरणानि दृश्यन्ते । धनभाजां धनिनां पुत्रादपि स्वात्मजा-दपि भीतिर्मरणादिभयं भवतीति शेषः ।

यावद्वित्तोपार्जनसक्तः
तावन्निजपरिवारो रक्तः।
तदनु च जरया जर्जरदेहे
वार्त्तां कोऽपि न पृच्छति गेहे॥
दिनयामिन्यौ सायं प्रातः
शिशिरवसन्तौ पुनरायातः।
कालः क्रीडति, गच्छत्यायुः,
तदपि न मुञ्चत्याशावायुः॥
अङ्गं गलितं, पलितं मुण्डं,
दन्तविहीनं जातं तुण्डं।
करधृत-कम्पित-शोभित दण्डं,
तदपि न मुञ्चत्याशाभाण्डं॥

शङ्कराचार्य्यविरचितो मोहमुद्गरः।

---

रत्नसंग्रहः ।

भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्दुरा[२७] यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥

वरं वनं व्याघ्रगजेन्द्रसेवितं
द्रुमालयः, पत्रफलाम्बुभोजनम् ।
तृणानि शय्या, वसनञ्च वल्कलं,
न बन्धुमध्ये धनहीनजीवनम् ।

वररुचिविरचितं नीतिरत्नम् ।

गुणा गुणज्ञेषु गुणा भवन्ति,
ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयाः प्रभवन्ति नद्यः,
समुद्रमासाद्य भवन्त्यपेयाः ॥
विद्या विवादाय, धनं मदाय,
शक्तिः परेषां परिपीड़नाय ।
खलस्य, साधोर्विपरीतमेतत्
ज्ञानाय दानाय च रक्षणाय ॥

भवभूतिविरचितं गुणरत्नम् ।

(२७) दर्दुराः मण्डूकाः ।

# रामायणम् ।

---

आक्रयीकृत्वी रामेण सुमन्त्रविसर्जनम् ।

इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तदा ।
दृष्ट्वा दूरगतं रामं दुःखार्त्तो रुरुदे(१) चिरम् ॥
ततस्तु विगते वाष्पे सूतं स्पृष्टोदकं शुचिम् ।
रामस्तु मधुरं वाक्यं पुनः पुनरुवाच तम् ॥
इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ।
यथा दशरथो राजा मां न शोचेत् तथा कुरु ॥
यद् यथाज्ञापयेत् किञ्चित् स महात्मा महीपति
कैकेय्याः प्रियकामार्थं कार्य्यं तदविकाङ्क्षया(२) ॥
एतदर्थं हि राज्यानि प्रशासति नराधिपाः ।
यदेषां सर्व्वकृत्येषु मनो न प्रतिहन्यते ॥
यद्यथा स महाराजो नालीक(३)मधिगच्छति ।
न च ताम्यति शोकेन, सुमन्त्र कुरु तत्तथा ॥

---

(१) रुरोद । आत्मनेपदमार्षम् ।
(२) अविकाङ्क्षया अस्मदादीनाम् अविमर्षया, आदरमित्यर्थः ।
(३) अलीकम् अप्रियम् दुःखमिति यावत्, व्यलीकमित्यर्थः ।

अदृष्टदुःखं राजानं वृद्धमार्य्यं जितेन्द्रियम् ।
ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥
न चाहमनुशोचामि लक्ष्मणो न च शोचति ।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति(४) वा ॥
चतुर्द्दशसु वर्षेषु निवृत्तेषु पुनः पुनः ।
लक्ष्मणं माञ्च सीताञ्च द्रक्ष्यसे(५) क्षिप्रमागतान् ॥
एवमुक्त्वा तु राजानं मातरञ्च सुमन्त्र मे ।
अन्याश्च देवीः सहिताः(६) कैकेयीञ्च पुनः पुनः ।
आरोग्यं ब्रूहि कौशल्यामथ पादाभिवन्दनम् ।
सीताया मम चार्य्यस्य(७) वचनाल्लक्ष्मणस्य च ॥
ब्रूयाश्चापि महाराजं भरतं शीघ्रमानय ।
आगतश्चापि भरतः स्थाप्यो नृपमते पदे ॥
भरतञ्च परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्सन्तापजं दुःखं न त्वामभिभविष्यति ॥
भरतश्चापि वक्तव्यो यथा राजनि वर्त्तसे ।
तथा मातृषु वर्त्तेथाः सर्व्वास्वेवाविशेषतः ॥
यथा च तव कैकेयी सुमित्रा चाविशेषतः ।
तथैव देवी कौशल्या मम माताविशेषतः ॥

(४) वत्स्यामहेति सन्धिः आत्मनेपदमार्षम् । (५) आत्मनेपदमार्षम् ।
(६) मम माता इति शेषः । (७) आर्य्यस्य श्वशुरस्य ।

तातस्य प्रियकामेण यौवराज्यमवेक्षता(८)।
लोकयोरुभयोः शक्यं नित्यदा(९) सुखमेधितुम्(१०)॥

निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः।
तत् सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत्॥
यदहं नोपचारेण(११) ब्रूयां स्नेहादविक्लवः।
भक्तिमानिति तत्तावद्वाक्यं त्वं क्षन्तुमर्हसि॥
कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम्।
तव तात वियोगेन पुत्रशोकातुरामिव॥
सराममपि तावन्मे रथं दृष्ट्वा तदा जनः।
विना रामं रथं दृष्ट्वा विदीर्येतापि(१२) सा पुरी॥
दैन्यं हि नगरी गच्छेत् दृष्ट्वा शून्यमिमं रथम्।
सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे॥
दूरेऽपि निवसन्तं त्वां मानसेनाग्रतः स्थितम्।
चिन्तयन्त्योऽद्य नूनं ताः निराहाराः कृताः प्रजाः॥
दृष्टं तद्धि त्वया राम यादृशं त्वत्प्रवासने।
प्रजानां सङ्कुलं वृत्तं त्वच्छोकक्लान्तचेतसाम्॥

(८) अवेक्षमाणेन। परस्मैपदमार्षम्।
(९) नित्यदा इति छान्दसः प्रयोगः।
(१०) वर्धयितुम्। अकर्मकोऽपि एधधातुरत्र सकर्मकः प्रयुक्तः।
(११) उपचारेण स्वामिभृत्योचितसत्कारेण।
(१२) अपिः सम्भावनार्थः।

आर्त्तनादो हि यः पौरै-रुन्मुक्तस्त्वत्प्रवासने ।
सरथं मां निशाम्यैव कुर्य्युः शतगुणं ततः ॥
अहं किञ्चापि वक्ष्यामि देवीं, तव सुतो मया ।
नीतोऽसौ मातुलकुलं सन्तापं मा कृथा इति ॥
सत्यञ्चैव प्रियञ्चैव ब्रूयाद्धि वचनं गुरुम् ।
कथमप्रियमेवाहं ब्रूयां गुरुमिदं वचः ॥
मम तावन्नियोगस्था-स्त्वद्बन्धुजनवाहिनः ।
कथं रथं त्वया हीनं प्रवाक्ष्यन्ति(१३) हयोत्तमाः ॥
तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ ।
वनवासानुयानाय मामनुज्ञातुमर्हसि ॥
यदि मे याचमानस्य त्यागमेव करिष्यसि ।
सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥
भविष्यन्ति वने यानि तपोविघ्नकराणि ते ।
रथेन प्रतिबाधिष्ये तानि सर्व्वाणि राघव ॥
त्वत्कृतेन(१४) मया प्राप्तं रथचर्य्याकृतं सुखम् ।
आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥
प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः(१५) ।
प्रीत्याभिहितमिच्छामि भव मे प्रत्यनन्तरः ॥

(१३) प्रवक्ष्यन्ति । प्रवाक्ष्यन्तीति आर्षः प्रयोगः ।
(१४) त्वत्कृतेन त्वत्कृतानुग्रहरूपफलेन ।
(१५) प्रथमः प्रत्यनन्तरः प्रत्यासन्नोऽनुवर्त्ती । द्वितीयस्त्वनुकूलः ।

तत्र शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन् ।
अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहम् ॥
न हि शक्या प्रवेष्टुं सा मयायोध्या त्वया विना ।
राजधानी महेन्द्रस्य यथा दुष्कृतकर्म्मणा ॥
इमेऽपि च हया वीर यदि ते वनवासिनः ।
परिचर्य्यां करिष्यन्ति, प्राप्स्यन्ति परमां गतिम् ॥
वनवासे क्षयं प्राप्ते ममैष हि मनोरथः ।
यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥
चतुर्दश हि वर्षाणि सहितस्य त्वया वने ।
क्षणभूतानि यास्यन्ति, शतसंख्यानि चान्यथा ॥
भक्तवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि ।
भक्तं भृत्यं स्थितं स्थित्यां न मां त्वं हातुमर्हसि ॥
एवं बहुविधं दीनं याचमानं पुनः पुनः ।
रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥
जानामि परमां भक्तिं मयि ते भर्तृवत्सल ।
शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥
नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ।
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ॥
परितुष्टा हि सा देवी वनवासं गते मयि ।
राजानं नातिशङ्केत मिथ्यावादीति धार्म्मिकम् ॥

एष मे प्रथमः कल्पो यदम्बा मे यवीयसी ।
भरतारक्षितं स्फीतं पुत्रराज्यमवाप्नुयात् ॥
मम प्रियार्थं राज्ञश्च सुमन्त्र त्वं पुरीं व्रज ।
सन्दिष्टश्चापि यानर्थान्(१६) तांस्तान् ब्रूयास्तथा तथा ॥

---

### सीता प्रवासनम् ।

ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः ।
उवाच मैथिलीं वाक्यं प्राञ्जलिर्वाक्यसंवृतः(१७) ॥
हृद्गतं मे महत् शल्यं, यस्मादार्य्येण धीमता ।
अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः(१८) ॥
श्रेयो हि मरणं मेऽद्य मृत्योर्वा यत् परं भवेत् ।
न चास्मिन्नीदृशे कार्य्ये नियोज्यो लोकनिन्दिते ॥
प्रसीद च, न मे पापं कर्त्तुमर्हसि(१९) शोभने ।
इत्यञ्जलिकृतो(२०) भूमौ निपपात स लक्ष्मणः ॥

(१६) अर्थान् अभिधेयान् मदुक्तविषयानिति यावत् ।
(१७) वाक्यसंवृतः संवृतवागित्यर्थः ।
(१८) वचनीकृतः निन्दनीयः कृत इत्यर्थः । वच कर्म्मणि अनट्, अभूत-तद्भावे च्विः ।
(१९) पापं कर्त्तुं दोषं प्राप्तुमित्यर्थः ।
(२०) अञ्जलिकृतः कृताञ्जलिरित्यर्थः ।

रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ।
मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण ।
पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ? ॥
शापितोऽसि नरेन्द्रेण यत्त्वं सन्तापमागतः ।
तद्ब्रूयाः सन्निधौ मह्यम्(२१) अहमाज्ञापयामि ते ॥
वैदेह्या नोद्यमानस्तु लक्ष्मणो दीनचेतनः ।
अवाङ्मुखो वाष्पगलो वाक्यमेतदुवाच ह ॥
श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ।
रामः सन्तप्तहृदयो मां निवेद्य गृहं गतः ॥
न तानि वचनीयानि(२२) मया देवि तवाग्रतः ।
यानि राज्ञा हृदि न्यस्तान्यमर्षादपवादजात ॥
सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ(२३) ।
पौरापवादभीतेन, ग्राह्यं देवि न तेऽन्यथा ॥

(२१) मह्यं ममेत्यर्थः । अथवा मह्यं ब्रूयाः इति अन्वय.

(२२) वचनीयानि वक्तुं शक्यानि ।

(२३) मम सन्निधौ अग्निपरीक्षादिभिः निर्दोषापीत्यर्थः ।

आश्रमान्तेषु च मया त्यक्तया त्वं भविष्यसि ।
राज्ञः शासनमादाय तथैव किल दौर्हृदम्[२४] ।
तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ।
पुण्यं च रमणीयं च, मा विषादं कृथाः शुभे ॥
राज्ञो दशरथस्यैव पितुर्मे मुनिपुङ्गवः ।
सखा परमको[२५] विप्रो वाल्मीकिः सुमहायशाः ॥
पादच्छाया[२६] मुपागम्य सुखमस्य महात्मनः ।
उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ।
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥
लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ॥
सा मुहूर्तमिवासंज्ञा बाष्पपर्य्याकुलेक्षणा ।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ।
धात्रा, यस्यास्तथा मेऽद्य दुःखमूर्त्तिः[२७] प्रदृश्यते ॥

(२४) दौर्हृदम् आदाय गर्भिण्या अभिलषितमवश्यं कार्य्यमिति ज्ञात्वा इत्यर्थः ।
(२५) परमकः श्रेष्ठः (स्वार्थे कन्) ।
(२६) पादच्छायां पादमूलं तत्पारतन्त्र्यमिति यावत् ।
(२७) मूर्त्तिमान् दुःखसमूहः ।

किन्नु पापं कृतं पूर्व्वं, को वा दारैर्वियोजितः ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥
पुराहमाश्रमे वासं रामपादानुवर्त्तिनी ।
अनुरुद्धापि सौमित्रे दुःखे च परिवर्त्तिनी ॥
सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥
किन्नु वक्ष्यामि मुनिषु कर्म्म चासत् कृतं प्रभोः ।
कस्मिन् वा कारणे त्यक्ता राघवेण महात्मना ॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ।
त्यजेयं, राजवंशस्तु भर्त्तुर्मे परिहास्यते(२८) ॥
यथाज्ञां कुरु सौमित्रे त्यज्य(२९) मां दुःखभागिनीम् ।
निदेशे स्थीयतां राज्ञः, शृणु चेदं वचो मम ॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण(३०) मे ।
शिरसा वन्द्य(३१) चरणौ कुशलं ब्रूहि लक्ष्मण ॥

---

(२८) परिहास्यते विच्छिन्नो भविष्यतीत्यर्थः ।

(२९) त्यज्य इति आर्षः प्रयोगः, त्यक्त्वा ।

(३०) प्रकृष्टाञ्जलिग्रहणसमेतेन इति शिरोविशेषणम् ।

(३१) वन्द्य इति आर्षः प्रयोगः, वन्दित्वा ।

वक्तव्यश्चापि नृपतिर्धर्म्मेषु सुसमाहितः ।
जानासि च यथा शुद्धा सीता तत्त्वेन राघव ॥
भक्त्या च परया युक्ता हिता च तव नित्यशः ।
अहं त्यक्ता त्वया वीर अयशोभीरुणा जने ॥
यच्च ते वचनीयं(३२) स्यादपवादसमुत्थितम्(३३) ।
मया च परिहर्त्तव्यं, त्वं हि मे परमा गतिः ॥
वक्तव्यश्चैव नृपतिर्धर्म्मेषु सुसमाहितः ।
यथा भ्रातृषु वर्त्तेथास्तथा पौरेषु नित्यदा ॥
परमो ह्येष धर्म्मस्ते, तस्मात् कीर्त्तिरनुत्तमा ॥
अहन्तु नानुशोचामि स्वशरीरं नरर्षभ ।
यथापवादः पौराणां तथैव रघुनन्दन ॥(३४)
पतिर्हि देवता नार्य्याः, पतिर्बन्धुः, पतिर्गुरुः ।
प्राणैरपि प्रियं तस्मात् भर्त्तुः कार्य्यं विशेषतः ॥
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहम्(३५) ॥

(३२) वचनीयं निन्दा ।

(३३) अपवादः मम असाध्वीत्वरूपाख्यातिः तस्मात् समुत्थितम् उत्पन्नम् ।

(३४) यथा पौराणाम् अपवादः अपगच्छेत् तथैव कुरु इत्यर्थः ।

(३५) रामं प्रति मदुक्तस्य संक्षेपमित्यर्थः ।

इति ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ।
शिरसा वन्द्य(३६) धरणीं व्याहर्तुं न शशाक ह ॥
प्रदक्षिणञ्च तां कृत्वा(३७) रुदन्नेव महास्वनम् ।
आरुरोह पुनर्नावं नाविकं चाभ्यनोदयत् ॥
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ।
संमूढ इव दुःखेन रथमध्यारुरुहद्द्रुतम्(३८) ॥
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ।
चेष्टन्तीं(३९) परतीरस्थां लक्ष्मणः प्रययावथ ॥
दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ।
निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥

(३६) वन्द्य इति आर्षः प्रयोगः । वन्दित्वा ।
(३७) प्रदक्षिणं कृत्वा, आर्षः प्रयोगः । प्रदक्षिणीकृत्य ।
(३८) अध्यारुरुहत्, आर्षः प्रयोगः । अध्यारोहत् ।
(३९) चेष्टन्तीम्, आर्षः प्रयोगः । चेष्टमानाम् ।

# मार्कण्डेय-पुराणम् ।

—०—

## हरिश्चन्द्रोपाख्यानम् ।

हरिश्चन्द्रेति(१) राजर्षि-रासीत् त्रेतायुगे पुरा ।
धर्मात्मा पृथिवीपालः प्रोल्लसत्कीर्त्ति-रुत्तमः ॥
न दुर्भिक्षं न च व्याधि-र्नाकालमरणं नृणाम् ।
नाधर्मरुचयः पौरा-स्तस्मिन् शासति पार्थिवे ॥
स कदाचिन्महाबाहु ररण्येऽनुसरन् मृगम् ।
शुश्राव शब्दमसकृत् त्रायस्वेत्यथ योषिताम्(२) ॥
स विहाय मृगं राजा मा भैषीरित्यभाषत ।
मयि शासति दुर्मेधाः कोऽयमन्यायवृत्तिमान् ॥
तत्क्रन्दितानुसारी च क्रोधादिदमथाब्रवीत् ।
कोऽयं बध्नाति वस्त्रान्ते पावकं पापकृन्नरः ।
बलोष्णतेजसा(३) दीप्ते मयि पत्यावुपस्थिते ॥
कोऽद्य मत्कार्मुकाक्षेप-विदीपित-दिगन्तरैः ।
शरैर्विभिन्नसर्वाङ्गो दीर्घनिद्रां प्रवेक्ष्यति ? ॥

(१) 'हरिश्चन्द्र इति' सन्धिरार्षः ।
(२) स्त्रीरूपधारिणीनां विद्यानामित्यर्थः ।
(३) बलेन कायिकशक्त्या उष्णेन तीव्रेण तेजसा कोपदर्पजनितात्

विश्वामित्रस्ततः क्रुद्धः श्रुत्वा तन्नृपतेर्वचः ।
सुदूरात् तं समालोक्य तिष्ठ तिष्ठेति चाब्रवीत् ॥
स चापि राजा तं दृष्ट्वा विश्वामित्रं तपोनिधिम् ।
भीतः प्रावेपतात्यर्थं सहसाश्वत्थपर्णवत् ॥
ततः स राजा विनयात् प्रणिपत्याभ्यभाषत ॥
भगवन्नेष मे धर्म्मो नापराधो मम प्रभो ।
स क्रोद्धुमर्हसि मुने निजधर्म्मरतस्य मे(४) ॥
दातव्यं रक्षितव्यञ्च धर्म्मज्ञेन महीक्षिता ।
चापं चोद्यम्य योद्धव्यं धर्म्मशास्त्रानुसारतः ॥

विश्वामित्र उवाच ।

दातव्यं कस्य(५) ? के रक्ष्याः ? केर्योद्धव्यञ्च ते नृप ?
क्षिप्रमेतत्समाचक्ष्व यद्यधर्म्मभयं तव ॥

राजोवाच ।

दातव्यं विप्रमुख्येभ्यो ये चान्ये कृशवृत्तयः(६)
रक्ष्या भीताः, सता युद्धं कर्त्तव्यं परिपन्थिभिः(७) ॥

(४) निजधर्म्मरताय मह्यमित्यर्थः ।

(५) कस्य कस्मै इत्यर्थः ।

(६) कृशा क्षीणा अल्पा इति यावत् वृत्तिः जीवनोपायः येषां ते दरिद्रा इत्यर्थः ।

(७) परिपन्थिभिः शत्रुभिः ।

विश्वामित्र उवाच।

यदि राजा भवान् सम्यक् राजधर्ममवेक्षसे।
निर्व्विष्टुकामो(८) विप्रोऽहं, दीयतामिष्टदक्षिणा॥

एतद्राजा वचः श्रुत्वा प्रहृष्टेनान्तरात्मना।
पुनर्जातमिवात्मानं मेने प्राह च कौशिकम्।
उच्यतां भगवन् यत्ते दातव्यमविशङ्कितम्।
दत्तमित्येव तद्विद्धि यद्यपि स्यात् सुदुर्लभम्॥
हिरण्यं(९) वा सुवर्णं वा पुत्रः पत्नी कलेवरम्।
प्राणा राज्यं पुरं लक्ष्मी यदभिप्रेतमात्मनः॥

विश्वामित्र उवाच।

राजन् प्रतिगृहीतोऽयं यस्ते दत्तः प्रतिग्रहः।
प्रयच्छ प्रथमं तावत् दक्षिणां राजसूयिकाम्॥

राजोवाच।

ब्रह्मंस्तामपि दास्यामि दक्षिणां भवता ह्यहम्।
व्रियतां द्विजशार्दूल यस्तवेष्टः प्रतिग्रहः।

(८) निर्व्विष्टुं भोक्तुं कामोऽभिलाषो यस्य सः, भोगाभिलाषी। 'निर्वेशो भृति भोगयोः'' इत्यमरः।

(९) हिरण्यं रूप्यम्। ''अकुप्यं च नपुंसकम्'' इति मेदिनी। ''स्यात् कोषश्च हिरण्यञ्च हेमरूप्ये कृताकृते'' इत्यमरः।

विश्वामित्र उवाच ।

ससागरां धरामेतां सभूभृद्ग्रामपत्तनाम् ।
राज्यञ्च सकलं वीर रथाश्वगजसङ्कुलम् ।
कोष्ठागारञ्च(१०) कोषञ्च, यच्चान्यत् विद्यते तव ।
विना भार्य्याञ्च पुत्रञ्च शरीरञ्च तवानघ ॥
धर्म्मञ्च सर्व्वधर्म्मज्ञ यो यान्तमनुगच्छति ।
बहुना वा किमुक्तेन, सर्व्वमन्यत् प्रदीयताम् ॥
प्रहृष्टेनैव मनसा सोऽविकारमुखो नृपः ।
तस्यर्षेर्वचनं श्रुत्वा तथेत्याह कृताञ्जलिः ॥

विश्वामित्र उवाच ।

सर्व्वस्वं यदि मे दत्तं राज्यमुर्व्वी बलं धनम् ।
प्रभुत्वं कस्य राजर्षे राज्यस्थे तापसे मयि ? ॥

हरिश्चन्द्र उवाच ।

पूर्व्वं यस्मिन्नदत्ता ते काले राज्यवतो मही ।
तस्मिन्नपि भवान् स्वामी, किमुताद्य महीपतिः ॥

विश्वामित्र उवाच ।

यदि राजंस्त्वया दत्ता मम सर्व्वा वसुन्धरा ।
यत्र मे विषये स्वाम्यं तस्मान्निर्व्वक्तुमर्हसि ।

(१०) कोष्ठागारं कुसूलम् ।

श्रोणीसूत्रादि-सकलं मुक्त्वा भूषणवर्जितम् ।
तरुवल्कलमाबध्य सह पत्न्या सुतेन च ॥ (युग्मकम्)

श्रुत्वा राजा ततो वाक्यं वज्रपातोपमं मुनेः ।
मुहूर्त्तमासीन्निश्चेष्टो नाहमस्मीत्यचिन्तयत् ॥
मुहूर्त्तात् प्राप्य संज्ञां तु ब्रह्मशापभयातुरः ।
ज्ञात्वा वशिष्ठं जलगं(११) सर्व्वत्यागेऽकरोन्मतिम् ॥
तथेति चोक्त्वा कृत्वा च राजा गन्तुं प्रचक्रमे ।
सपत्न्या शैव्यया सार्द्धं बालकेनात्मजेन च ॥
व्रजतः स ततो रुद्ध्वा पन्थानं प्राह तं नृपम् ।
क यास्यसीत्यदत्त्वा मे दक्षिणां राजसूयिकीम् ॥

राजोवाच ।

भगवन् राज्यमेतत्ते दत्तं निहतकण्टकम् ।
अवशिष्टमिदं ब्रह्मन्नद्य देहत्रयं मम ॥

विश्वामित्र उवाच ।

तथापि खलु दातव्या त्वया मे यज्ञदक्षिणा ।
विशेषतो ब्राह्मणानां ह्यन्यद्दत्तं प्रतिश्रुतम् ॥

(११) गङ्गाजलेऽपि तपःसाधनार्थं वहिर्गतम् । यथा
निश्चक्राम महातेजा जलवासात् पुरोहितः ।
वशिष्ठो द्वादशाब्दान्ते गङ्गावार्य्युषितो मुनिः ॥
मार्कण्डेयपुराणम् ।

प्रतिश्रुत्य च दातव्यं, योद्धव्यं चाततायिभिः ।
रक्षितव्यास्तथा चार्त्ता-स्त्वयैव प्राक् प्रतिश्रुतम् ॥

राजोवाच ।

भगवन् साम्प्रतं नास्ति, दास्ये कालक्रमेण ते ।
प्रसादं कुरु विप्रर्षिसद्भाव(१२)मनुचिन्त्य च ॥

विश्वामित्र उवाच ।

किंप्रमाणो मया कालः प्रतीक्ष्यस्ते नराधिप ।
शीघ्रमाचक्ष्व, शापाग्निरन्यथा त्वां प्रधक्ष्यति ॥

राजोवाच ।

मासेन तव विप्रर्षे प्रदास्ये दक्षिणाधनम् ।
साम्प्रतं नास्ति मे वित्तमनुज्ञां दातुमर्हसि ॥

विश्वामित्र उवाच ।

गच्छ गच्छ नृपश्रेष्ठ, स्वधर्ममनुपालय ।
शिवश्च तेऽध्वा भवतु, मा सन्तु परिपन्थिनः ॥

अनुज्ञातः स गच्छेति जगाम वसुधाधिपः ।
पद्भ्यामनुचिता गन्तुमन्वगच्छत्त तं प्रिया ॥

---

(१२) विप्रर्षिणा वशिष्ठेन सह सद्भाव सौहार्दम् । "प्रसादं कुरु विप्रर्षे सद्भावमनुचिन्त्य मे" इति पाठे तु मम सद्भावं मदभिप्रायं विविच्य इत्यर्थः ।

तं सभार्य्यं नृपश्रेष्ठ निर्यान्तं सहितं पुरात् ।
दृष्ट्वा प्रचुक्रुशुः पौरा राजश्चैवानुयायिनः ॥
हा नाथ किं जहास्यस्मान्नित्यार्त्तिपरिपीड़ितान ।
त्वं धर्म्मतत्परो राजन् दीनानुग्रहकृत् तथा ॥
नयास्मानपि राजर्षे यदि धर्म्ममवेक्षसे ॥
मुहूर्त्तं तिष्ठ राजेन्द्र, भवतो मुखपङ्कजम् ।
पिबाम नेत्रभ्रमरैः(१३), कदा द्रक्ष्यामहे(१४) पुनः ॥
यस्य प्रयातस्य पुरो यान्ति पृष्ठे च पार्थिवाः ।
तस्यानुयाति भार्य्येयं गृहीत्वा बालकं सुतम् ॥
यस्य भृत्याः प्रयातस्य यान्त्यग्रे कुञ्जरस्थिताः ।
स एव पद्भ्यां राजेन्द्रो हरिश्चन्द्रोऽद्य गच्छति ॥
हा राजन् सुकुमारं ते सुभ्रु सुत्वगुन्नसम् ।
पथि पांशुपरिक्लिष्टं मुखं कीदृक् भविष्यति ॥
तिष्ठ तिष्ठ नृपश्रेष्ठ, स्वधर्म्ममनुपालय ।
आनृशंस्यं(१५) परो धर्म्मः क्षत्रियाणां विशेषतः ॥

(१३) यथा भ्रमरा अरविन्दमकरन्दं पिबन्ति, तथा वयं लोचनैर्भवतो मुखं पिबाम, भवन्मुखं सस्पृहमवलोकयाम इत्यर्थः ।
(१४) द्रक्ष्यामहे इति आर्षः प्रयोगः । द्रक्ष्यामः ।
(१५) आनृशंस्यम् अक्रौर्य्यम्, आर्त्तानां परित्राणमिति यावत् ।
"क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढ़ः ।"
रघुवंशम्

किं दारैः किं सुतैर्नाथ धनैर्धान्यैरथापि वा ।
सर्व्वमेतत् परित्यज्य छायाभूता(१६) वयं तव ॥
हा नाथ हा महाराज हा स्वामिन् किं जहासि नः
यत्र त्वं तत्र हि वयं, तत् सुखं यत्र वै भवान् ॥
नरको यत्र न भवान्, स स्वर्गो यत्र नो नृपः ॥

इति पौरवचः श्रुत्वा राजा शोकपरिप्लुतः ।
अतिष्ठत(१७) तदा मार्गे तेषामेवानुकम्पया ॥
विश्वामित्रोऽपि तं दृष्ट्वा पौरवाक्यार्गलाहतम् ।
रोषामर्षविवृत्ताक्षः समागम्य वचोऽब्रवीत् ॥
धिक् त्वां दुष्टसमाचारमनृतं जिह्मभाषिणम् ।
मम(१८) राज्यं प्रदत्त्वा(१९) यः पुनश्चाक्रष्टुमिच्छसि ॥
इत्युक्तः परुषं तेन गच्छामीति सवेपथुः ।
ब्रुवन्नेव ययौ शीघ्रमाकर्षन् दयितां करे ॥
कर्षतस्तां प्रियां भार्य्यां सुकुमारीं श्रमातुराम् ।
दण्डकाष्ठेन सहसा ताड़यामास कौशिकः ॥

---

(१६) छायाभूताः छायेव अनुयायिनः भवाम इति शेषः । "छायेव तां भूपतिरन्वगच्छत् ।" रघुवंशम् ।

(१७) तिष्ठामीति स्वाभिप्रायं प्रकटितवानित्यर्थः । "प्रतिज्ञानिर्णयप्रकाशे संप्रत्यनाश्च स्थः" इति मुग्धबोधमतात् आत्मनेपदम् ।

(१८) मम इत्यार्षम्, मह्यम् ।

(१९) प्रदत्त्वा इत्यार्षम्, प्रदाय ।

तां तथा ताडितां दृष्ट्वा हरिश्चन्द्रो नराधिपः ।
गच्छामीत्याह दुःखार्त्तो नान्यत् किञ्चिदुदाहरन् ॥
विश्वामित्रवचः श्रुत्वा स राजा प्रययौ शनैः ।
शैब्ययानुगतो दुःखी भार्य्यया बालपुत्त्रया ॥
स ययौ वसुधापालो दिव्यां वाराणसीं पुरीम् ।
नैषा मनुष्यभोग्या हि शूलपाणेः परिग्रहः[२०] ॥
जगाम पद्भ्यां दुःखार्त्तः सह पत्न्या समाकुलः ।
पुरीप्रवेशे ददृशे[२१] विश्वामित्रमवस्थितम् ॥
तं दृष्ट्वा समनुप्राप्तं विनयावनतोऽभवत् ।
प्राह चैवाञ्जलिं कृत्वा हरिश्चन्द्रो महामुनिम् ॥
इमे प्राणाः सुतश्चायमियं पत्नी मुने मम ।
येन कृत्यं तवैतेषु तं गृहाणार्घमुत्तमम् ॥
यच्चान्यत् कार्य्यमस्माभिस्तदनुज्ञातुमर्हसि ॥

विश्वामित्र उवाच ।

पूर्णः स मासो राजर्षे, दीयतां मम दक्षिणा ।
राजसूयनिमित्तं, हि स्मर्य्यते स्ववचो यदि ॥

---

२०) परिग्रहस्त्विति पत्नी इति परिभाष, अधिकार इति शास्त्रम् ।
२१) ददृशे इत्यत्रात्मनेपदमार्षम् । ददर्श ।

राजोवाच ।

ब्रह्मन्नद्यैव सम्पूर्णो मासो ज्ञानतपोबल ।
तिष्ठत्येतद्दिनार्द्धं यत् तत् प्रतीक्षस्व मा चिरम् ॥

विश्वामित्र उवाच ।

एवमस्तु महाराज, आगमिष्याम्यहं पुनः ।
शापं तव प्रदास्यामि न चेदद्य प्रदास्यसि ॥
इत्युक्त्वा प्रययौ विप्रो राजाप्यचिन्तयत्तदा ।
कथमस्मै प्रदास्यामि दक्षिणां प्राक् प्रतिश्रुताम् ॥
कुतः पुष्टानि मित्राणि, कुतोऽर्थः साम्प्रतं मम ।
प्रतिग्रहः प्रदुष्टो मे, तत्र याचाम्यहं कथम् ॥
किन्नु प्राणान् विमुञ्चामि, कां दिशं याम्यकिञ्चनः ।
यदि नाशं गमिष्यामि अप्रदाय प्रतिश्रुतम् ।
ब्रह्मस्वहृत् कृमिः पापो भविष्याम्यधमाधमः ॥
अथवा प्रेष्यतां यास्ये(२१), वरमेवात्मविक्रयः ॥

राजानं व्याकुलं दीनं चिन्तयान(२२)मधोमुखम्
प्रत्युवाच तदा पत्नी बाष्पगद्गदया गिरा ॥
त्यज चिन्तां महाराज, स्वसत्यमनुपालय ।
श्मशानवत् वर्जनीयो नरः सत्यबहिष्कृतः ॥

(२१) यास्ये इत्यार्षम्, यास्यामि

(२२) चिन्तयानमित्यार्षम्, चिन्तयन्तम्

नातः परतरं धर्मं वदन्ति पुरुषस्य तु ।
यादृशं पुरुषव्याघ्र स्वसत्यपरिपालनम् ॥
अग्निहोत्रमधीतञ्च दानाद्याः सकलाः क्रियाः ।
भवन्ति तस्य विफला यस्य वाक्यमकारणम् ॥
सत्यमत्यन्तमुदितं (२४) धर्मशास्त्रेषु धीमताम् ।
तारणायानृतं तद्वत् पातनायाकृतात्मनाम् ॥
सप्ताश्वमेधानाहृत्य राजसूयं च पार्थिव ।
कृती जनश्च्युतः स्वर्गादसत्यवचनात् सकृत् ॥
राजन् जातमपत्यं मे—इत्युक्त्वा प्ररुरोद ह ।
वाष्पाम्बुप्लुतनेत्रां तामुवाचेदं महीपतिः ॥
विमुञ्च भद्रे सन्तापमयं तिष्ठति बालकः ।
उच्यतां वक्तुकामासि यद् वाक्यमृतभाषिणि ॥

राजपत्न्युवाच ।

राजन् जातमपत्यं मे, सतां पुत्रफलाः स्त्रियः ।
स मां प्रदाय वित्तेन देहि विप्राय दक्षिणाम् ॥
एतद्वाक्यमुपश्रुत्य ययौ मोहं महीपतिः ।
प्रतिलभ्य च संज्ञां स विललापातिदुःखितः ॥
महद्दुःखमिदं भद्रे यत्त्वमेवं ब्रवीषि माम् ।
किं तव स्मितसंलापाः मम पापस्य विस्मृताः ॥

२४, उदितं कथितम् ।

हा हा कथं त्वया शक्यं वक्तुमेतत् शुचिस्मिते ।
दुर्व्वाच्यमेतद्वचनं, कर्त्तुं शक्ष्याम्यहं कथम् ॥
इत्युक्त्वा स नृपश्रेष्ठो धिग्धिगित्यसकृत् ब्रुवन् ।
निपपात महीपृष्ठे मूर्च्छयाभिपरिप्लुतः ॥
शयानं भुवि तं दृष्ट्वा हरिश्चन्द्रं महीपतिम् ।
उवाचेदं सकरुणं राजपत्नी सुदुःखिता ॥
हा महाराज कस्येदमपध्यानादुपागतम्(२५) ।
यत्त्वं निपतितो भूमौ राङ्कवास्तरणोचितः ॥
येनाग्रे कोटिशो वित्तं विप्राणामपवर्जितम् ।
स एष पृथिवीनाथो भूमौ स्वपिति मे पतिः ॥
हा कष्टं किं तवानेन कृतं दैव महीक्षिता ।
यदिन्द्रोपेन्द्रतुल्योऽयं नीतः प्रस्वापिनीं दशाम् ॥
इत्युक्त्वा सापि सुश्रोणी मूर्च्छिता निपपात ह ।
भर्त्तुर्दुःखमहाभारेणासह्येनातिपीडिता ॥
तौ तथा पतितौ भूमावनाथौ पितरौ शिशुः ।
दृष्ट्वात्यर्थं क्षुधाविष्टः प्राह वाक्यं सुदुःखितः ॥
तात तात ददस्वान्नमम्ब अम्ब भोजनं दद(२६) ।
क्षुन्मे बलवती जाता जिह्वाग्रं शुष्यते(२७) तथा ॥

---

(२५) अपध्यानात् अहितचिन्तनात् अभिशापादिति यावत् ।
(२६) दद इत्यार्षम्, ददस्व । (२७) शुष्यते इत्यार्षम्, शुष्यति ।

एतस्मिन्नन्तरे प्राप्तो विश्वामित्रो महातपाः ।
कालकल्प इव क्रुद्धो मार्गितुं दक्षिणाधनम् ॥
दृष्ट्वा तु तं हरिश्चन्द्रं पतितं भुवि मूर्च्छितम् ।
स वारिणा समभ्युक्ष्य राजानमिदमब्रवीत् ॥
उत्तिष्ठोत्तिष्ठ राजेन्द्र तां ददस्वेष्टदक्षिणाम् ।
ऋणं धारयतो दुःखमहन्यहनि वर्द्धते ॥
आप्याय्यमानः स तदा हिमशीतेन वारिणा ।
अवाप्य चेतनां राजा विश्वामित्रमवेक्ष्य च ।
पुनर्मोहं समापेदे,—अथ क्रोधं ययौ मुनिः ॥
समाश्वास्य स राजानं वाक्यमाह द्विजोत्तमः ।
दीयतां दक्षिणा सा मे यदि धर्ममवेक्षसे ॥
सत्येनार्कः प्रतपति, सत्ये तिष्ठति मेदिनी ।
सत्यमुक्तं परो धर्मः, स्वर्गः सत्ये प्रतिष्ठितः ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥
अथवा किं ममैतेन साम्ना प्रोक्तेन कारणम् ।
अनार्य्ये पापसंकल्पे क्रूरे चानृतवादिनि ।
त्वयि राजन् प्रभवति सद्भावः श्रूयतां मम ॥
अद्य मे दक्षिणां राजन् न दास्यति भवान् यदि ।
अस्ताचलं प्रयातेऽर्के शप्स्यामि त्वां ततो ध्रुवम् ॥

इत्युक्त्वा स ययौ विप्रो राजा चाभूद्भयातुरः ।
कान्दिग्भूतो(२८)ऽधमो निःस्वो नृशंसेन धनार्हितः(२९) ॥
भार्य्यास्य भूयः प्राहेदं क्रियतां वचनं मम ।
मा शापानलनिर्दग्धः प्रलयमुपयास्यसि ॥
स तथा नोद्यमानस्तु राजा पत्न्या पुनः पुनः ।
प्राह भद्रे करोम्येष विक्रयं तव निर्घृणः(३०) ॥
नृशंसैरपि यत् कर्त्तुं न शक्यं तत् करोम्यहम् ।
यदि मे शक्यते वाणी वक्तुमीदृक् सुदुर्वचः ॥
एवमुक्त्वा ततो भार्य्यां गत्वा नगरमातुरः ।
बाष्पापिहितकण्ठाक्षो राजा वचनमब्रवीत् ॥
भो भो नागरिकाः सर्व्वे शृणुध्वं वचनं मम ।
किं मां पृच्छथ कस्त्वं भोः, नृशंसोऽहममानुषः ।
राक्षसो वातिकठिनस्ततः पापतरोऽपि वा ।
विक्रेतुं दयितां प्राप्तो यो न प्राणांस्त्यजाम्यहम् ॥
यदि वः कस्यचित् कार्य्यं दास्या प्राणेष्टया मम
स ब्रवीतु त्वरायुक्तो यावत् संधारयाम्यहम्(३१) ॥

(२८) कां दिशं गमिष्यामीति हताशभूतः ।
(२९) धनम् (मूल्यरूपम्) अर्हितः याचितः
(३०) निर्घृणः निष्करुणः ।
(३१) प्राणानिति शेषः ।

अथ वृद्धो द्विजः कश्चिदागत्याह नराधिपम्।
समर्पयस्व मे दासीमहं क्रेता धनप्रदः॥
अस्ति मे वित्तमस्तोकं, सुकुमारी च मे प्रिया।
गृहकर्म्म न शक्नोति कर्त्तुं तस्मात् प्रयच्छ मे॥
कर्म्मण्यता-वयो-रूप-शीलानां योषितस्तव।
अनुरूपमिदं वित्तं गृहाणार्पय चाबलाम्॥
एवमुक्तस्य विप्रेण हरिश्चन्द्रस्य भूपतेः।
व्यदीर्य्यत(३२) मनो दुःखान्न चैनं किञ्चिदब्रवीत्॥
ततः स विप्रो नृपतेर्वल्कलान्ते दृढं धनम्।
बद्ध्वा केशेष्वथादाय नृपपत्नीमकर्षत॥
रुरोद रोहिताश्वोऽपि दृष्ट्वाकृष्टां तु मातरम्।
हस्तेन वस्त्रमाकर्षन् काकपक्षधरः(३३) शिशुः॥

राजपत्न्युवाच।

मुञ्चार्य्य मुञ्च तावन्मां यावत् पश्याम्यहं शिशुम्।
दुर्लभं दर्शनं तात पुनरस्य भविष्यति॥
पश्यैहि वत्स मामेवं मातरं दास्यतां गताम्।
मा मां स्प्राक्षी राजपुत्र अस्पृश्याहं तवाधुना॥

(३२) व्यदीर्य्यत विदीर्णमभवत्। विपूर्व्वकात् दृधातोः कर्म्मवाच्ये लङ्।
(३३) शिखण्डकधारी। "काकपक्षः शिखण्डकः" इत्यमरः।

ततः स बालः सहसा दृष्ट्वाकृष्टां तु मातरम् ।
समभ्यधावदम्बेति वदन् सास्राविलेक्षणः ॥
तमागतं द्विजः क्रोधात् बालमभ्याहनत(२४) पदा ।
वदंस्तथापि सोऽम्बेति नैवामुञ्चत मातरम् ॥

राजपत्न्युवाच ।

प्रसादं कुरु मे नाथ क्रीणीष्वेमञ्च बालकम् ।
क्रीतापि नाहं भवतो विनैनं कार्य्यसाधिका ॥
इत्थं ममाल्पभाग्यायाः प्रसादप्रमुखो भव ।
मां संयोजय बालेन वत्सेनेव पयस्विनीम् ॥

ब्राह्मण उवाच ।

गृह्यतां वित्तमेतद्भोः दीयतां मम बालकः ।
स्त्रीपुंसो(२५)र्धर्म्मशास्त्रज्ञैः कृतमेव हि वेतनम् ।
शतं सहस्रं लक्षञ्च कोटिमूल्यं तथापरैः ॥
तथैव तस्य तद्वित्तं बद्ध्वोत्तरपटे ततः ।
प्रगृह्य बालकं मात्रा सहैकस्थमबन्धयत(२६) ॥
नीयमानौ ततो दृष्ट्वा भार्य्या-पुत्रौ स पार्थिवः ।
विललाप सुदुःखार्त्तो निश्वस्योष्णं पुनः पुनः ॥

(२४) अहनत इति आर्षः प्रयोगः । अहन् ।
(२५) स्त्रीपुंसोरित्यार्षम् । स्त्रीपुंसयोः ।
(२६) चुरादिगणीय बन्धधातो लङ् ।

यां न वायुर्नचादित्यो नेन्दुर्नच पृथग्जनाः(१७)।
दृष्टवन्तः पुरा पत्नीं सेयं दासत्वमागता॥
सूर्य्यवंशप्रसूतोऽयं सुकुमारकराङ्गुलिः।
सम्प्राप्तो विक्रयं बालो धिङ्मामस्तु सुदुर्मतिम्॥
हा प्रिये हा शिशो, वत्स ममानार्य्यस्य दुर्नयैः।
दैवाधीनां दशां प्राप्तौ न मृतोऽस्मि तथापि, धिक्

एवं विलपतो राज्ञः स विप्रोऽन्तरधीयत(१८)।
वृक्षगेहादिभिस्तुङ्गैस्तावादाय त्वरान्वितः॥
विश्वामित्रस्ततः प्राप्तो नृपं वित्तमयाचत।
तस्मै समर्पयामास हरिश्चन्द्रोऽपि तद्धनम्॥
तद्वित्तं स्तोकमालोक्य दारविक्रयसम्भवम्।
शोकाभिभूतं राजानं कुपितः कौशिकोऽब्रवीत्॥
क्षत्रबन्धो(१९) ममेमां त्वं सदृशीं यज्ञदक्षिणाम्।
मन्यसे यदि, तत् क्षिप्रं द्रक्ष्यतां मे बलं परम्।
तपसोऽत्र सुतप्तस्य ब्राह्मण्यस्यामलस्य च।
मत्प्रभावस्य चोग्रस्य शुद्धस्याध्ययनस्य च॥

(१७) नीचजनाः।

(१८) अन्तरधीयत इत्यार्षः प्रयोगः, अन्तरधत।

(१९) निन्दायां बन्धुशब्दः प्रयुज्यते, यथा ब्रह्मबन्धुः, क्षत्रबन्धुः। हे क्षत्रियाधम इत्यर्थः।

राजोवाच ।

अन्यां दास्यामि भगवन्, कालः कश्चित् प्रतीक्ष्यताम् ।
साम्प्रतं नास्ति, विक्रीता पत्नी पुत्रश्च बालकः ॥

विश्वामित्र उवाच ।

चतुर्भागः स्थितो योऽयं दिवसस्य, नराधिप ।
एष एव प्रतीक्ष्यो मे, वक्तव्यं नोत्तरं त्वया ॥
तमेवमुक्त्वा राजानं निर्घृणं निष्ठुरं वचः ।
तदादाय धनं तूर्णं कुपितः कौशिको ययौ ॥

विश्वामित्रे गते राजा भयशोकाब्धिमध्यगः ।
सर्व्वाकारं विनिश्चित्य प्रोवाचोच्चैरिदं वचः ॥
वित्तक्रीतेन यस्यार्थी मया प्रेष्येण(४०)मानवाः ।
स ब्रवीतु त्वरायुक्तो यावत्तपति भास्करः ॥
अथाजगाम त्वरितो धर्म्मश्चण्डालरूपधृक् ।
स्वगणाभिवृतो घोरो यष्टिहस्तो निराकृतिः (४१) ॥

चाण्डाल उवाच ।

अहमर्थी त्वया, शीघ्रं कथय स्वात्मवेतनम् ।
स्तोकेन बहुना वापि येन वै लभ्यते भवान् ॥

(४०) प्रेष्येण भृत्येन ।

(४१) रमणीयाकृतिहीनः कुत्सिताकार इत्यर्थः । अथवा वेदानध्येता, वेदविरुद्धकार्य्यकारी वा । "निराकृतिरनाकारेऽस्वाध्याये त्रिषु" इति मेदिनी ।

स तादृशमथालक्ष्य क्रूरदृष्टिं सुनिष्ठुरम् ।
वदन्तमतिदुःशीलं कस्त्वमित्याह पार्थिवः ॥

चण्डाल उवाच ।

चण्डालोऽहमिहाख्यातः प्रवीरेति(४२) पुरोत्तमे ।
विख्यातो वध्यवधको मृतकम्बलहारकः ॥

राजोवाच ।

नाहं चण्डालदासत्वमिच्छेयं सुविगर्हितम् ।
वरं शापाग्निना दग्धो न चण्डालवशं गतः ॥
तस्यैवं वदतः प्राप्तो विश्वामित्रस्तपोनिधिः ।
कोपामर्षविवृत्ताक्षः प्राह चेदं नराधिपम् ॥
चण्डालोऽयमनल्पं ते दातुं वित्तमुपस्थितः ।
कस्मान्न दीयते मह्यमशेषा यज्ञदक्षिणा ॥

हरिश्चन्द्र उवाच ।

भगवन् सूर्य्यवंशोत्थमात्मानं वेद्मि कौशिक ।
कथं चण्डालदासत्वं गमिष्ये(४३) वित्तकामुकः ॥

विश्वामित्र उवाच ।

यदि चण्डालवित्तं त्वमात्मविक्रयजन्म मे ।
न प्रदास्यसि कालेन शप्स्यामि त्वामसंशयम् ॥

(४२) प्रवीरः इति सन्धिरार्षः ।
(४३) गमिष्ये इत्यत्र आत्मनेपदमार्षम्, गमिष्यामि ।

हरिश्चन्द्रस्ततो राजा चिन्तावस्थितजीवितः।
प्रसीदेति वदन् पादावृषेर्जग्राह विक्लवः॥
दासोऽस्म्यार्त्तोऽस्मि भीतोऽस्मि त्वद्भक्तश्च विशेषतः।
कुरु प्रसादं विप्रर्षे, कष्टा चण्डालसङ्गतिः॥
भवेयं वित्तशेषेण सर्व्वकर्म्मकरो वशः।
तवैव मुनिशार्दूल प्रेष्यश्चित्तानुवर्त्तकः॥

विश्वामित्र उवाच।

यदि प्रेष्यो मम भवान्, चण्डालाय ततो मया।
दासभावमनुप्राप्तो दत्तो वित्तार्ब्बुदेन वै॥
एवमुक्ते तदा तेन श्वपाको(४४) हृष्टमानसः।
विश्वामित्राय तद्द्रव्यं दत्त्वा बद्ध्वा नरेश्वरम्।
दण्डप्रहारसम्भ्रान्तमतीव व्याकुलेन्द्रियम्।
इष्टबन्धुवियोगार्त्तमनयन्निजपक्कणम्(४५)॥
हरिश्चन्द्रस्ततो राजा वसंश्चाण्डालपक्कणे।
प्रातर्मध्याह्नसमये सायञ्चैतदगायत(४६)॥
बाला दीनमुखी दृष्ट्वा बालं दीनमुखं पुरः।
मां स्मरत्यसुखाविष्टा मोचयिष्यति नौ नृपः॥

(४४) कुक्कुरभक्षकः, चण्डाल इति यावत्।
(४५) "पक्कणः शबरालयः" इत्यमरः।
(४६) अगायत इत्यत्रात्मनेपदमार्षम्, अगायत्।

उपात्तवित्तो विप्राय दत्त्वा वित्तमतोऽधिकम्।
न सा मां मृगशावाक्षी वेत्ति पापतरं कृतम्[४७]
राज्यनाशः सुहृत्त्यागो भार्य्यातनयविक्रयः।
प्राप्ता चण्डालता चेयं—अहो दुःखपरम्परा॥
एवं स न्यवसन्नित्यं संस्मरन् दयितं सुतम्।
भार्य्यां चात्मसमाविष्टां हृतसर्व्वस्व आतुरः॥
कस्यचित् त्वथ कालस्य मृतचेलापहारकः।
हरिश्चन्द्रोऽभवद्राजा श्मशाने तद्वशानुगः॥
चाण्डालेनानुशिष्टश्च मृतचेलापहारिणा।
शवागमनमन्विच्छन्निह तिष्ठ दिवानिशम्॥
इदं राज्ञे धनं देयं षष्ठभागं शवं प्रति।
त्रयस्तु मम भागाः स्युर्द्वौ भागौ तव वेतनम्॥
इति प्रतिसमादिष्टो जगाम शवमन्दिरम्।
दिशं तु दक्षिणां, यत्र वाराणस्यां स्थितं तदा।
श्मशानं घोरसन्नादं शिवाशतसमाकुलम्।
शवमौलिसमाकीर्णं दुर्गन्धं बहुधूमकम्।
पिशाचभूतवेताल-डाकिनीयक्षसङ्कुलम्।
गृध्रगोमायुसङ्कीर्णं श्ववृन्दपरिवारितम्।
अस्थिसङ्घसमाकीर्णं महादुर्गन्धसङ्कुलम्।

[४७] कृधातोः कर्त्तरि अतीते क्विप्, कृतवन्तमिति यावत्

नानाक्रन्दसमुन्नाद-महाकल्लोलसङ्कुलम् ।
हा पुत्र मित्र हा बन्धो भ्रातर्वत्स प्रियेऽद्य मे ।
हा मातर्भागिनेयाश्च हा मातुल पितामह ।
मातामह पितः पौत्र क्व गतोऽस्येहि हा पते ।
इत्येवं वदतां यत्र ध्वनिः संश्रूयते महान् ॥ कुलकम् ।
अर्द्धदग्धाः शवाः यत्र विकटद्रुतपङ्क्तयः ।
हसन्तीवाग्निमध्यस्थाः कायस्येयं दशा विति ॥
अग्नेश्चटचटा शब्दो वयसामस्थिपङ्क्तिषु ।
बान्धवाक्रन्दशब्दश्च पुक्कसेषु(४८) प्रहर्षदः ।
गायतां भूत-वेताल-पिशाचगण-रक्षसाम् ।
श्रूयते सुमहाघोषः कल्पान्त इव सर्वतः ॥ युग्मकम्
स राजा तत्र सम्प्राप्तो दुःखितः शोकनोदितः ॥
हा भृत्या मन्त्रिणो विप्राः क्व तद्राज्यं विधे गतम् ।
हा शैब्ये पुत्र हा बाल, मां त्यक्त्वा मन्दभाग्यकम् ।
विश्वामित्रस्य दोषेण, गताः कुत्रापि ते मम ।
इत्येवं चिन्तयंस्तत्र चाण्डालोक्तं समाचरन् ।
इदं मम इदं राज्ञो मुख्यचण्डालके त्विदम् ।
इत्यथावदथो राजा जीवन् योन्यन्तरं गतः ॥ विशेषकम् ।

(४८) चण्डालेषु । "निषाद श्वपचावन्तेवासि चण्डाल-पुक्कसाः" इत्यमरः ।

जीर्णकर्पटसुग्रन्थि-कृतकन्थापरिग्रहः ।
चिताभस्मरजोलिप्त-मुखबाहूदराङ्घ्रिकः ।
नानामेदोवसासृज्ञा-लिप्तकण्ठाङ्गुलिः श्वसन् ।
नानाशवौदनकृताहारतृप्तिपरायणः ।
तदीयमाल्यसंश्लेष-कृतमस्तकमण्डनः ।
न रात्रौ न दिवा शेते हाहेति प्रवदन् मुहुः ॥
एवं द्वादश मासास्तु नीताः शतसमोपमाः ॥
अथाजगाम स्वसुतं मृतमादाय लापिनी(४४)
भार्य्या तस्य नरेन्द्रस्य सर्पदष्टं हि बालकम् ॥
हा वत्स हा पुत्र शिशो इत्येवं वदती मुहुः ।
कृशा विवर्णा विमनाः पांशुध्वस्तशिरोरुहा ॥

राजपत्न्युवाच ।

हा राजन्नद्य बालं त्वं पश्यसीमं महीतले ।
रममाणं पुरा दृष्टं दष्टं पुष्टाहिना मृतम् ॥
तस्या विलापशब्दन्तमाकर्ण्य स नराधिपः ।
जगाम त्वरितोऽवैति भविता मृतकम्बलः ॥
स तां रोरुदतीं भार्य्यां नाभ्यजानात्तु पार्थिवः
चिरप्रवासमन्तप्तां पुनर्जातामिवाबलाम् ॥

---

४४) लापिनी विलापवती विलपन्तीति यावत् ।

सापि तं चारुकेशान्तं पुरा दृष्ट्वा जटालकम् ।
नाभ्यजानान्नृपसुता शुष्कवृक्षोपमं नृपम् ॥
सोऽपि कृष्णपटे बालं दृष्ट्वाशीविषपीडितम् ।
नरेन्द्रलक्षणोपेतं चिन्तामाप नरेश्वरः ॥
अहो कष्टं! नरेन्द्रस्य कस्याप्येष कुले शिशुः ।
जातो नीतः कृतान्तेन कामवस्थां दुरात्मना ॥
एवं दृष्ट्वा हि मे बालं मातुरुत्सङ्गशायिनम् ।
स्मृतिमभ्यागतो बालो रोहिताश्वोऽब्जलोचनः ॥
सोऽप्येतामेव मे वत्सो वयोऽवस्थामुपागतः ।
नीतो यदि न घोरेण कृता तेनात्मनो वशम् ॥

राजपत्न्युवाच ।

हा वत्स कस्य पापस्य अपध्यानादिदं महत् ।
दुःखमापतितं घोरं यस्यान्तो नोपलभ्यते ।
हा नाथ राजन् भवता मामनाश्वास्य दुःखिताम् ।
क्वापि सन्तिष्ठता(५०) स्थाने विश्रब्धं स्थीयते कथम् ॥
राज्यनाशः सुहृत्त्यागो भार्यातनयविक्रयः ।
हरिश्चन्द्रस्य राजर्षेः किं विधे न कृतं त्वया ॥
इति तस्या वचः श्रुत्वा राजा स्वस्थानतश्च्युतः ।
प्रत्यभिज्ञाय दयितां पुत्रञ्च निधनं गतम् ॥

(५०) सन्तिष्ठता इत्यत्र परस्मैपदमार्षम्, सन्तिष्ठमानेन ।

कष्टं शैब्येयमेषा हि स बालोऽयमितीरयन् ।
रुरोद दुःखसन्तप्तो मूर्च्छामभिजगाम च ॥
सा च तं प्रत्यभिज्ञाय तामवस्थामुपागतम् ।
मूर्च्छिता निपपातार्त्ता निश्चेष्टा धरणीतले ॥
चेतः संप्राप्य राजेन्द्रो राजपत्नी च तौ समम् ।
विलेपतुः सुसन्तप्तौ शोकभारातिपीड़ितौ ॥

राजोवाच ।

हा वत्स सुकुमारं ते सुविभ्रनासिकालकम् ।
पश्यतो मे मुखं दीनं हृदयं किं न दीर्य्यते ॥
तात तातेति मधुरं ब्रुवाणं स्वयमागतम् ।
उपगुह्य वदिष्ये(१) किं वत्स वत्सेति सौहृदात् ॥
कस्य जानुप्रणीतेन पिङ्गेन क्षितिरेणुना ।
ममोत्तरीयमुत्सङ्गस्तथाङ्गं मलमेष्यति ॥
अङ्गप्रत्यङ्गसम्भूतो मनोहृदयनन्दनः ।
मया कुपित्रा हा वत्स विक्रीतो येन वस्तुवत् ॥
हृत्वा राज्यमशेषं मे ससाधनधनं महत् ।
दैवाहिना नृशंसेन दष्टो मे तनयस्ततः ॥

(१) "ज्ञानयत्नप्रणीश्वं वद" इति सूत्रात् वदिष्ये इति आत्मनेपदं, कथय वक्ष्यामि इत्यर्थः ।

अहं दैवाद्धिदष्टस्य पुत्रस्याननपङ्कजम्।
निरीक्षन्नपि(५२) घोरेण विषेणान्धीकृतोऽधुना॥
एवमुक्त्वा तमादाय बालकं बाष्पगद्गदः।
परिष्वज्य च निश्चेष्टो मूर्च्छया निपपात ह॥

राजपत्न्युवाच।

अयं स पुरुषव्याघ्रः स्वरेणैवोपलक्ष्यते।
विद्वज्जनमनश्चन्द्रो हरिश्चन्द्रो न संशयः॥
तथास्य नासिका तुङ्गा अग्रतोऽधोमुखं गता।
दन्ताश्च मुकुलप्रख्याः ख्यातकीर्त्तेर्महात्मनः॥
श्मशानमागतः कस्माद्द्यैष स नरेश्वरः।
अपहाय पुत्रशोकं साऽपश्यत् पतितं पतिम्॥
प्रहृष्टा(५३) विस्मिता दीना भर्त्तृपुत्राधिपीडिता।
वीक्षन्ती(५४) सा ततोऽपश्यत् भर्त्तृदण्डं जुगुप्सितम्।
श्वपाकार्हमतो मोहं जगामायतलोचना॥
प्राप्य चेतश्च शनकैः सगद्गदमभाषत॥
धिक् त्वां दैवातिकरुणं निर्मर्य्यादं जुगुप्सितम्।
येनायममरप्रख्यो नीतो राजा श्वपाकताम्॥

---

(५२) निरीक्षन् इति आर्षम्, निरीक्षमाणः।

(५३) प्रहृष्टा राज्ञः श्वपाकदशादर्शनेन पुत्रशोकादाकृष्टचित्ता इत्यर्थः।

(५४) वीक्षन्तीति आर्षम्, वीक्षमाणा।

राज्यनाशं सुहृत्त्यागं भार्य्यातनयविक्रयम् ।
प्रापयित्वापि(५५) नो मुक्तश्चाण्डालोऽयं कृतो नृपः ॥
हा राजन् ज्ञातसन्तापामित्थं मां धरणीतलात् ।
उत्थाप्य नाद्य पर्य्यङ्कमारोहेति किमुच्यते ॥
नाद्य पश्यामि ते छत्रं भृङ्गारमथवा पुनः ।
चामरं व्यजनञ्चापि, कोऽयं विधिविपर्य्ययः ॥
यस्याग्रे व्रजतः पूर्व्वं राजानो भृत्यतां गताः ।
स्वोत्तरीयैरकुर्व्वन्त नीरजस्कं महीतलम् ॥
सोऽयं कपालसंलग्न-घटीघटनिरन्तरे ।
मृतनिर्म्माल्यसूत्रान्तर्गूढकेशे सुदारुणे ।
गृध्रगोमायुनादार्त्त-नष्टक्षुद्रविहङ्गमे ।
चिताधूमाततिश्यामा नीलीकृतदिगन्तरे ।
कुणपास्वादनमुदा संप्रहृष्टनिशाचरे ।
चरत्यमेध्ये राजेन्द्रः श्मशाने दुःखपीड़ितः ॥ विशेषकम् ।
एवमुक्त्वा समाश्लिष्य कण्ठं राज्ञो नृपात्मजा ।
कष्टशोकशताधारा विललापार्त्तया गिरा ॥
राजन् स्वप्नोऽथ तथ्यं वा यदेतन्मन्यते भवान् ।
तत् कथ्यतां महाभाग, मनो वै मुह्यते(५६) मम ॥

---

(५५) प्रापयित्वा इति आर्षः प्रयोगः, प्रापय्य ।

(५६) मुह्यते इत्यत्र आत्मनेपदमार्षम्, मुह्यति ।

यद्येतदेवं धर्म्मश्च नास्ति धर्म्मे सहायता ।
तथैव विप्रदेवादि-पूजने पालने भुवः ॥
नास्ति धर्म्मः, कुतः सत्यमार्जवं चानृशंसता ।
यत्र त्वं धर्म्मपरमः स्वराज्यादवरोपितः ॥
इति तस्या वचः श्रुत्वा निश्वस्योष्णं सगद्गदम् ।
कथयामास तन्वङ्ग्याः यथा प्राप्ता श्वपाकता ॥
रुदित्वा सापि सुचिरं निश्वस्योष्णञ्च दुःखिता ।
सुपुत्रमरणं भीरुर्यथा तत्तं न्यवेदयत् ॥

राजोवाच ।

प्रिये न रोचये दीर्घं कालं क्लेशमुपासितुम् ।
नात्मायत्तश्च तन्वङ्गि, पश्य मे मन्दभाग्यताम् ॥
चाण्डालेनाननुज्ञातः प्रवेक्ष्ये(५७) ज्वलनं यदि ।
चण्डालदासतां यास्ये(५८) पुनरप्यन्यजन्मनि ॥
एकोऽपि बालको योऽयमासीद् वंशकरः सुतः ।
मम दैवाम्बुवेगेन मग्नः सोऽपि बलीयसा ॥
मग्नस्य दुःखजलधौ पारः प्राणवियोजनम् ॥
कथं प्राणान् विमुञ्चामि परायत्तोऽस्मि दुर्गतः ।
अथवा नार्त्तिना(५९) क्लिष्टो नरः पापमवेक्षते ॥

(५७ प्रवेक्ष्ये इत्यार्षम् प्रवेक्ष्यामि ।
(५८) यास्ये इत्यार्षम्, यास्यामि ।
(५९) आर्त्तिना इत्यार्षम्, आर्त्या ।

तिर्य्यक्त्वे नास्ति तद्दुःखं नास्त्रिपत्रवने(१०) तथा ।
वैतरण्यां कुतस्तादृक् यादृशं पुत्रविप्लवे ॥
सोऽहं सुतशरीरेण दीप्यमाने हुताशने ।
निपतिष्यामि, तन्वङ्गि क्षन्तव्यं कुकृतं मम ॥
अनुज्ञाता च गच्छ त्वं विप्रवेश्म शुचिस्मिते ।
मम वाक्यञ्च तन्वङ्गि निबोधाहृतमानसा ॥
यदि दत्तं यदि हुतं गुरवो यदि तोषिताः ।
परत्र सङ्गमो भूयात् पुत्रेण सह च त्वया ॥
अन्यथा हसता किञ्चित् रहस्ये वा शुचिस्मिते ।
कठोरमुक्तं तत् सर्व्वं क्षन्तव्यं मम याचतः ॥

राजपत्न्युवाच ।

अहमप्यत्र राजर्षे दीप्यमाने हुताशने ।
दुःखभारासहाद्यैव सह यास्यामि वै त्वया ॥
ततः कृत्वा चितां राजा आरोप्य तनयं स्वकम् ।
भार्य्यया सहितश्चासीद् बद्धाञ्जलिपुटस्तदा ।
चिन्तयन् परमात्मानमीशं नारायणं हरिम् ।
हृत्कोटरगुहासीनं वासुदेवं सुरेश्वरम् ।
अनादिनिधनं ब्रह्म कृष्णं पीताम्बरं शुभम् ॥

---

(१०) असिपत्रवने नरकविशेषे ।

तस्य चिन्तयमानस्य(११) सर्व्वे देवाः सवासवाः।
धर्म्मं प्रमुखतः कृत्वा समाजग्मुस्त्वरान्विताः॥
आगत्य सर्व्वे प्रोचुस्ते, भो भो राजन् शृणु प्रभो।
अयं पितामहः साक्षात्, धर्म्मश्च भगवान् स्वयम्।
एते च रुद्रा देवा विश्वामित्रस्तथैव च।
विश्वत्रयेण यो मित्रं कर्त्तुं न शकितः पुरा।
विश्वामित्रः स ते मैत्रीमिष्टामाहर्त्तुमिच्छति॥

इन्द्र उवाच।

हरिश्चन्द्र महाभाग प्राप्तः शक्रोऽस्मि तेऽन्तिकम्।
त्वया सदारपुत्रेण जिता लोकाः सनातनाः॥
आरोह त्रिदिवं राजन् भार्य्यापुत्रसमन्वितः।
सुदुष्प्रापं नरैरन्यैर्जितमात्मीयकर्म्मभिः॥
ततोऽमृतमयं वर्षमपमृत्युविनाशनम्।
इन्द्रः प्रासृजदाकाशात् चितास्थानगतः प्रभुः।
समुत्तस्थौ ततः पुत्रो राज्ञस्तस्य महात्मनः।
सुकुमारतनुः सुस्थः प्रसन्नेन्द्रियमानसः॥
ततो राजा हरिश्चन्द्रः परिष्वज्य सुतं क्षणात्।
सभार्य्यः स्वश्रिया युक्तो बभूव च मुदान्वितः॥

---

(११) चिन्तयमानस्य इत्यार्षम्, चिन्तयतः।

हरिश्चन्द्र उवाच ।

देवराजाननुज्ञातः स्वामिना श्वपचेन वै ।
अगत्वा निष्कृतिं तस्य नारोक्ष्ये(६२)ऽहं सुरालयम् ॥

धर्म्म उवाच ।

तवैनं भाविनं क्लेशमवगम्यात्ममायया ।
आत्मा श्वपाकतां नीतो दर्शितं तच्च चापलम् ॥

हरिश्चन्द्र उवाच ।

देवराज नमस्तुभ्यं वाक्यञ्चैतन्निबोध मे ।
प्रसादसुमुखं यत्त्वां ब्रवीमि प्रश्रयान्वितः ॥
मच्छोकमग्नमनसः कोशलानगरे जनाः ।
तिष्ठन्ति तानपोह्याद्य कथं यास्याम्यहं दिवम् ॥
यदि ते सहिताः स्वर्गं मया यान्ति सुरेश्वर ।
ततोऽहमपि यास्यामि नरकं वापि तैः सह ॥
एवं भविष्यतीत्युक्त्वा शक्रस्त्रिभुवनेश्वरः ।
गत्वायोध्याजनं प्राह दिवमारुह्यतामिति ॥
राज्ञा सह तदा सर्व्वे हृष्टपुष्टसुखञ्जनाः ।
सपुत्रभृत्यदारास्ते दिवमारुरुहुर्जनाः ॥

---

(६२) आरोक्ष्ये इत्यार्षम्, आरोक्ष्यामि ।

पृषध्रोपाख्यानम् ।

मार्कण्डेय उवाच ।

पृषध्राख्यो मनोः पुत्रो मृगव्यमगमद्वनम् ।
तत्र चंक्रम्यमाणोऽसौ विपिने निर्जने वने ।
नाससाद मृगं कञ्चित् भानुदीधितितापितः ।
क्षुतृष्णातापपरीताङ्ग इतस्ततश्च चंक्रमन् ॥ युग्मकम् ।
स ददर्श तदा तत्र होमधेनुं वनोदरे ।
लतावितानसंनद्धां ब्राह्मणस्याग्निप्रफुलिनः ॥
स मन्यमानो गवयमिषुणा तामताडयत् ।
पपात सा च तद्बाणविभिन्नहृदया भुवि ॥
ततोऽग्निप्रफुलिनः पुत्रो ब्रह्मचारी तपोरतः ।
सप्तवर्षः पितुर्दृष्ट्वा होमधेनुं निपातिताम् ।
गोपालः प्रेषितः पित्रा बाभ्रव्यो नाम बालकः ।
कोपामर्षपराधीन-चित्तवृत्तिस्ततो मुने(१२) ।
चकम्पे विगलत्स्वेदजलल्लोलाविलेक्षणः ॥ विशेषकम् ।
तं क्रुद्धं प्रेक्ष्य स नृपः पृषध्रो मुनिदारकम् ।
प्रसीदेति जगौ कस्माच्छूद्रवत् कुरुषे रुषम् ॥
न क्षत्रियो न वा वैश्य एवं क्रोधमुपैति वै
यथा त्वं शूद्रवज्जातो विशिष्टे ब्रह्मणः कुले ॥

---

(१२) क्रौष्टुकिनामकमुनिं प्रति मार्कण्डेयस्योक्तिः ।

इति निर्भर्त्सितस्तेन स राज्ञा शृङ्गिनः सुतः ।
शशाप तं दुरात्मानं शूद्र एव भविष्यसि ॥
प्रयास्यति क्षयं ब्रह्म(६४) यत्तेऽधीतं गुरोर्मुखात् ।
होमधेनुर्मम गुरोर्यदियं हिंसिता त्वया ॥
एवं शप्तो नृपः क्रुद्धस्तद्वाक्यपरिपीड़ितः ।
प्रतिशापपरो विप्र तोयं जग्राह पाणिना ॥
सोऽपि राज्ञो विनाशाय कोपं चक्रे द्विजात्मजः ।
तमभ्येत्य त्वरायुक्तो वारयामास वै पिता ॥
वत्सालमलमत्यर्थं कोपेनातीव वैरिणा ।
ऐहिकामुष्मिकहितः शम एव द्विजन्मनाम् ॥
कोपस्तपो नाशयति क्रुद्धो भ्रश्यत्यथायुषः(६५) ।
क्रुद्धस्य गलति ज्ञानं क्रुध्यन्नर्थात् प्रहीयते(६६) ॥
न धर्म्मः क्रोधशीलस्य, नार्थं चाप्नोति रोषणः ।
नालं सुखाय कामाप्तिः कोपेनाविष्टचेतसाम् ॥
यदि राज्ञा हता धेनुरियं विज्ञानिना(६७) सता ।
युक्तमत्र दयां कर्त्तुमात्मनो हितवेधिना ॥

---

(६४) वेद इत्यर्थः । "ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे", इति मेदिनी ।

(६५) दिवादिगणीय-भ्रन्शधातुः परस्मैपदी ।

(६६) प्रपूर्व्वकात् हा(क)धातोः कर्म्मकर्त्तरि लट् ते ।

(६७) ज्ञानवता, जानता इति यावत् ।

अथवाज्ञानता धेनुरियं व्यापादिता मम।
तत् कथं शापयोग्योऽयं, दुष्टं नास्य मनो यतः।
आत्मनो हितमन्विच्छन् बाधते योऽपरं नरः।
कर्त्तव्या मूढविज्ञाने दया तत्र दयालुभिः॥
अज्ञानतः कृते दण्डं पातयन्ति बुधा यदि।
बुधेभ्यस्तमहं मन्ये वरमज्ञानिनं नरम्॥
नायं शापस्त्वया देयः पार्थिवस्यास्य पुत्रक।
स्वकर्म्मणैव पतिता गौरेषा दुःखमृत्युना॥
पृषध्रोऽपि मुनेः पुत्त्रं प्रणम्यानतकन्धरः।
प्रसीदेति जगादोच्चैरज्ञानात् घातितेति च॥
मया गवयबुद्ध्या गौरत्रध्या घातिता मुने॥
"आजन्मनो महीपाल मया न व्याहृतं मृषा
क्रोधस्यापि महाभाग नान्यथा मे कदाचन॥
तन्नाहमेतं शक्नोमि शापं कर्त्तुं नृपान्यथा।
इति समुद्यतः शापो द्वितीयः स निवर्त्तितः।
इत्युक्तवन्तं तं बालमादाय स पिता ततः।
जगाम स्वाश्रमं सोऽपि पृषध्रः शूद्रतामगात्॥

खनीनेत्रोपाख्यानम्।

मार्कण्डेय उवाच।

अपुत्रः स महीपालो मृगयामुपचक्रमे।
पुत्रार्थं पितृयागाय मांसकामो महामुने(९८)॥
अश्वारूढो विना सैन्यमेक एव महावने।
बद्धगोधाङ्गुलित्राणो(९९) बाणखड्गधनुर्धरः॥
तं वाहयन्तं तुरगमन्यतो महतो वनात्।
विनिष्क्रम्य मृगः प्राह मां हत्वाभिमतं कुरु॥

राजोवाच।

अन्ये मृगाः पलायन्ते मृत्युभीत्या विलोक्य माम्।
कस्मादात्मप्रदानं त्वं मृत्यवे कर्त्तुमिच्छसि॥

मृग उवाच।

अपुत्रोऽहं महाराज वृथा जन्मप्रयोजनम्।
विचारयन् न पश्यामि प्राणानामिह धारणम्॥
अथाभ्येत्य मृगः प्राह तमन्यो वसुधाधिपम्।
मृगस्य तस्य प्रत्यक्षमलमेतेन पार्थिव॥

(९८) क्रोष्टुकिमम्बोधनमेतत्।

(९९) गोधा वामबाहौ ज्याघातार्थं धन्विभिः परिहितः चर्मविशेषः। "गोधा तले ज्याघातवारणे" इत्यमरः। अङ्गुलित्राणं अङ्गुलिरक्षणार्थं कृतः चर्माच्छादनविशेषः।

धातयस्वेति मां मामेदृक्कर्म्म समारभ(१०) ।
यथा कर्तायिता त्वं स्यास्तथा चाभ्युपकारिता ॥
पुत्रार्थं त्वं महाराज स्वपितॄन् यष्टुमिच्छसि ।
अपुत्रस्यास्य मांसेन लप्स्यसे वाञ्छितं कथम् ॥
यादृक् कर्म्म विनिष्पाद्यं तादृक् द्रव्यमुपाहरेत् ।
दुर्गन्धेन मृगस्यानां गन्धस्य तु विनिर्णयः ॥

राजोवाच ।

वैराग्यकारणं प्रोक्तमनेनापुत्रता मम ।
कथ्यतां प्राणसंत्यागे यत्ते वैराग्यकारणम् ॥

मृग उवाच ।

बहवो मे सुता भूप बह्व्यो दुहितरस्तथा ।
तच्चिन्तादुःखदावाग्निज्वालामध्ये वसाम्यहम् ॥
सर्व्वसाध्या(११) नरेन्द्रेयं मृगजातिः सुकातरा ।
तेष्वपत्येषु मे चातिममत्वं, तेन दुःखितः ॥
मनुष्यसिंहशार्दूलवृकादिभ्यो बिभेम्यहम् ।
निर्बलात् सर्व्वसत्त्वेभ्यः श्वशृगालादपि प्रभो ॥

---

(१०) समारभस्वार्थम्, समारभस्व ।
(११) सर्व्वेषां प्राणिनां साध्याः साधनार्हाः वधयोग्या इत्यर्थः । श्वापदा एव मृगजाति हन्तुं समर्था इति तात्पर्य्यम् ।

निष्क्रान्तेषु च सर्व्वेषु ममापत्येषु वै पृथक् ।
भवन्ति चिन्ताः शतशो ममत्वाहृतचेतसः ॥
किं कूटपाशं किं वज्रं वागुरां किं सुतो मम ।
प्राप्तश्चरन् वने किं वा नृसिंहादिवशं गतः ॥
प्राप्तोऽयमेकः शङ्काऽऽमवस्थां कीदृशीं मम ।
साम्प्रतं वै चिरयन्ति ये गताः कुसुमावनम् ॥
दृष्ट्वा प्राप्तान् ममाभ्याशं संहृतानात्मजान् नृप ।
ईषद्बुभुक्षितः चेम्याभिक्षामि रजनीं पुनः ॥
प्रभाते दिवसे चेमम् अस्तगेऽर्के निशामपि ।
वाञ्छाम्यहं कदा चेमं सर्व्वकालं भविष्यति ॥
एतत्ते कथितं भूप मयोद्वेगस्य कारणम् ।
अतः प्रसादं कुरु मे वाणोऽयं पात्यतां मयि ॥
इति दुःखशताविष्टः प्राणानाहं त्यजामि यत् ।
तत्कारणं निबोधैतं ब्रुवतो मम पार्थिव ॥
असूर्य्या नाम ते लोका यान् गच्छन्त्यात्मघातकाः ।
यज्ञोपयुक्ताः पशवः संप्रयान्त्युच्छ्रितीः प्रभो ॥
अग्निः पशुरभूत् पूर्व्वं पशुरासीत् जलाधिपः ।
भास्वानथोच्छ्रितीः प्राप्तो यज्ञे निष्ठामुपागतः ॥
तस्मयि त्वं कृपां कृत्वा नय मामुच्छ्रितिं नृप ।
आत्मनश्चेप्सितं कामं पुत्रलाभादवाप्स्यसि ॥

पूर्व्वमृग उवाच ।

राजेन्द्र नैष हन्तव्यो धन्योऽयं सुकृती मृगः ।
बहवस्तनया यस्य, हन्तव्योऽहमसन्ततिः ॥

उत्तरमृग उवाच ।

एकदेहभवं यस्य दुःखं धन्यः स वै भव
बहूनि यस्य देहानि तस्य दुःखान्यनेकधा ॥
एको यदाहमासं प्राक् तदा तद्देहजं मम ।
दुःखमासीत्, ममत्वे तु भार्य्यायां तद्भूद्द्विधा ॥
यदा जातान्यपत्यानि तदा यावन्ति तानि वै ।
तावच्छरीरभूमीनि मम दुःखान्यथाभवन् ॥
स कृतार्थो भवान् यस्य नातिदुःखाय सम्भवः(७२) ।
इह दुःखाय मे भूतिः(७२) परत्र च विरोधिनी ॥
यतो रक्षणपोषार्थमपत्यानां करोमि तत् ।
चिन्तयामि च सम्भूतिर्येन मे नरके ध्रुवा ॥

राजोवाच ।

न वेद्मि किं सन्ततिमान् धन्योऽपुत्रो नु किं मृगः ।
पुत्रार्थश्चायमारम्भो मम दोलायते मनः ॥

---

(७२) सम्भव भूति-शब्दौ जन्मबोधकौ ।

दुःखाय सन्ततिः सत्यमैहिकामुष्मिकाय तत् ।
तथाप्यतनयान् यान्ति ऋणानीति श्रुतं मया ॥
सोऽहं यतिष्ये पुत्त्रार्थमतः प्राणिवधं विना ॥
तपसैव प्रपत्स्यामि(७२) पुत्त्रं, यात मृगाः सुखम् ॥

---

(७२) प्रपत्स्यामीत्यत्र परस्मैपदमार्षम्, प्रपत्स्ये ।

# महाभारतम् ।

बकराक्षस वधः ।

एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने ॥
रमणीयानि पश्यन्तो वनानि विविधानि च ।
पार्थिवानपि चोद्देशान् सरितश्च सरांसि च ।
चेरुर्भैक्ष्यं तदा ते तु सर्व्वे एव विशाम्पते ।
बभूवुर्नागराणाञ्च स्वैर्गुणैः प्रियदर्शनाः ॥ युग्मकम् ।
निवेदयन्ति स्म तदा कुन्त्या भैक्ष्यं सदा निशि ।
तया विभक्तान् भागांस्ते भुञ्जते स्म पृथक् पृथक् ॥
अर्द्धं ते भुञ्जते वीराः सह मात्रा परन्तपाः ।
अर्द्धं भैक्ष्यस्य सर्व्वस्य भीमो भुङ्क्ते महाबलः ॥
तथा तु तेषां वसतां तस्मिन् राष्ट्रे महात्मनाम् ।
अतिचक्राम सुमहान् कालोऽथ भरतर्षभ ॥
ततः कदाचित् भैक्ष्याय गतास्ते पुरुषर्षभाः ।
भवने भीमसेनस्तु तस्थौ पृथया सह ।

अथार्त्तिजं(१) महाशब्दं ब्राह्मणस्य निवेशने।
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत॥
रोरूयमाणांस्तान् दृष्ट्वा परिदेवयतश्च वा।
कारुण्यात् साधुभावाच्च कुन्ती राजन् न चक्षमे॥
मथ्यमानेन दुःखेन हृदयेन पृथा तदा।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः॥
वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने।
अज्ञाता धार्त्तराष्ट्रस्य सत्कृता(२) वीतमन्यवः(३)॥
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम्।
प्रियं कुर्य्यामिति, गृहे यत् कुर्य्युरुषिताः सुखम्।
एतावान् पुरुषस्तात कृतं यस्मिन् न नश्यति।
यावच्च कुर्य्यादन्योऽस्य कुर्य्यादभ्यधिकं ततः॥
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम्।
तत्रास्य यदि साहाय्यं कुर्य्यामुपकृतं(४) भवेत्॥

---

(१) आर्त्तिजम् मनःपीड़ाजातम् यातनोत्पन्नमिति यावत्।

(२) सत्कृताः सम्मानिताः सादरं परिगृहीताः।

(३) वीतमन्यवः विगतशोकाः व्यपगतदैन्या वा।

(४) उपकृतम् उपकारः प्रत्युपकार इति यावत्।

भीमसेन उवाच ।

आयतामस्य यद्दुःखं यतश्चैव समुत्थितम् ।
विदित्वा व्यवसिष्यामि(१) यद्यपि स्यात् सुदुष्करम् ॥
एवं तौ कथयन्तौ च भूयः शुश्रुवतुः स्वनम् ।
आर्त्तिजं तस्य विप्रस्य सभार्य्यस्य विशाम्पते ॥
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश त्वरिता कुन्ती बद्धवत्सेव सौरभी ॥
ततस्तं ब्राह्मणं तत्र भार्य्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्शावनताननम् ॥

ब्राह्मण उवाच ।

धिगिदं जीवितं लोके गतसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ॥
जीविते परमं दुःखं, जीविते परमो ज्वरः ।
जीविते वर्त्तमानस्य दुःखानामागमो ध्रुवः ॥
आत्मा ह्येको हि धर्म्मार्थौ कामं चैव निषेवते ।
एतैश्च विप्रयोगोऽपि दुःखं परमनन्तकम् ॥
आहुः केचित् परं मोक्षं, स च नास्ति कथञ्चन ।
अर्थप्राप्तौ तु नरकः कृत्स्न एवोपपद्यते ॥

---

(१) व्यवसिष्यामीत्यार्षम्, व्यवसास्यामि ।

अर्थेप्सुता(६) परं दुःख-मर्थप्राप्तौ ततोऽधिकम्।
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम्॥
न हि योगं(७) प्रपश्यामि येन मुच्येयमापदः।
पुत्रदारेण वा सार्द्धं प्रद्रवेयमनामयम्॥
यतितं वै मया पूर्व्वं वेत्थ ब्राह्मणि तत्तथा।
क्षेमं यतस्ततो गन्तुं, त्वया तु मम न श्रुतम्॥
इह जाता विवृद्धास्मि पिता चापि ममेति वै।
उक्तवत्यसि दुर्मेधे याच्यमाना मयासकृत्॥
स्वर्गतो हि पिता वृद्धस्तथा माता चिरं तव।
बान्धवा भूतपूर्व्वाश्च तत्र वासे तु का रतिः(८)॥
सोऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम।
बन्धुप्रणाशः सम्प्राप्तो भृशं दुःखकरो मम॥
अथवा मद्विनाशोऽयं, न हि शक्ष्यामि कथञ्चन।
परित्यक्तुमहं बन्धुं स्वयं जीवन् नृशंसवत्॥
सहधर्म्मचरीं दान्तां नित्यं भर्त्तृहिते रताम्।
सखायं विहितां देवैर्नित्यं परमिकां गतिम्।
पित्रा मात्रा च विहितां सदा गार्हस्थ्यभागिनीम्।

---

(६) अर्थेप्सुता अर्थप्राप्तीच्छा।
(७) योगम् उपायमित्यर्थः।
(८) रतिः अनुरागः, आदर इति यावत्।

वरयित्वा यथान्यायं मन्त्रवत्(१) परिणीय च।
कुलीनां शीलसम्पन्नाम् अपत्यजननीमपि।
तामहं जीवितस्यार्थे साध्वीमनपकारिणीम्।
परित्यक्तुं न शक्ष्यामि भार्य्यां नित्यमनुव्रताम्॥

कलापकम्।

कुत एव परित्यक्तुं सुतं शक्ष्याम्यहं स्वयम्।
बालमप्राप्तवयस-मजातव्यञ्जनाकृतिम्॥
भर्त्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना।
यया दौहित्रजान् लोकानाशंसे पितृभिः सह।
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे॥
मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः।
कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ॥
यस्यां लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम्।
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे॥
आत्मानमपि चोत्सृज्य तप्स्यामि परलोकगः।
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम्॥
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः।
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना॥
स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम्।
अहो धिक् कां गतिन्त्वद्य गमिष्यामि सबान्धवः॥

(१) "तदस्य मर्हम्" इति सूत्रेण वतुप्रत्ययः।

सर्व्वैः सहमृतं(१०) श्रेयो नच मे जीवितं क्षमम्॥

ब्राह्मण्युवाच।

न सन्तापस्त्वया कार्य्यः प्राकृतेनेव(११) कर्हिचित्।
न हि सन्तापकालोऽयं तव वैद्यस्य(१२) विद्यते॥
अवश्यं निधनं सर्व्वैर्गन्तव्यमिह मानवैः।
अवश्यम्भाविन्यर्थे वै सन्तापो नेह विद्यते॥
भार्य्या पुत्त्रोऽथ दुहिता सर्व्वमात्मार्थमिष्यते।
व्यथां जहि सुबुद्ध्या त्वं, स्वयं यास्यामि तत्र च॥
एतद्धि परमं नार्य्याः कार्य्यं लोके सनातनम्।
प्राणानपि परित्यज्य यद्भर्त्तृहितमाचरेत्॥
तच्च तत्र कृतं कर्म्म तवापीदं सुखावहम्।
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम्॥
एष चैव गुरुर्धर्म्मो यं प्रवक्ष्याम्यहं तव।
अर्थश्च तव धर्म्मश्च भूयानत्र प्रदृश्यते॥
यदर्थमिष्यते भार्य्या प्राप्तः सोऽर्थस्त्वया मयि।
कन्या चैका कुमारश्च कृताहमनृणा त्वया॥

(१०) सहमृतं सहमरणम्, एकत्र मिलित्वा मरणमिति यावत्।
(११) प्राकृतेन पृथग्जनेन मूढ़ेनेति यावत्।
(१२) वैद्यस्य, विद्यावतः, मनीषिण इति यावत्।

समर्थः पोषणे चासि सुतयो रक्षणे तथा ।
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ॥
मम हि त्वद्विहीनायाः सर्व्वप्राणधनेश्वर ।
कथं स्यातां सुतौ बालौ भवेयञ्च कथं त्वहम् ॥
कथं हि विधवानाथा बालपुत्त्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ॥
कथं तव कुलस्यैकामिमां बालामनागसम् ।
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ॥
कथं शक्ष्यामि बालेऽस्मिन् गुणानाधातुमीप्सितान् ।
अनाथे सर्व्वतो लुप्ते यथा त्वं धर्म्मदर्शिवान्(१३) ॥
इमामपि च ते बालामनाथां परिभूय माम् ।
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ॥
तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहिताम् ।
प्रमथ्यैनां हरेयुस्ते हविर्ध्वाङ्क्षा(१४) इवाध्वरात् ॥
संप्रेक्षमाणा पुत्त्रं ते नानुरूपमिवात्मनः ।
अनर्हवशमापन्नामिमां चापि सुतां तव ।
अवज्ञाता च लोकेषु मरिष्यामि न संशयः ॥
तौ च हीनौ मया बालौ त्वया चैव तथात्मजौ ।
विनश्येतां न सन्देहो मत्स्याविव जलक्षये ॥

---

(१३) दर्शिवान् इत्यार्षम्, दृष्टवान् । (१४) ध्वाङ्क्षा, वायसाः ।

त्रितयं सर्व्वथाप्येवं विनशिष्यत्यसंशयम् ।
त्वया विहीनं, तस्मात्त्वं मां परित्यक्तुमर्हसि ॥
व्युष्टिरेषा परा(१५) स्त्रीणां पूर्व्वं भर्त्तुः परां गतिम् ।
गन्तुं ब्रह्मन् सपुत्राणामिति धर्म्मविदो विदुः ॥
परित्यक्तः सुतश्चायं दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितञ्च मे ॥
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्त्तुर्नित्यं प्रियहिते स्थितिः ॥
तदिदं यच्चिकीर्षामि धर्म्मं परमसम्मतम् ।
इष्टञ्चैव हितञ्चैव तव चैव कुलस्य च ॥
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्म्मप्रमोक्षाय भार्य्या चापि सतां मतम् ॥
आपदर्थे धनं रक्षेत् दारान् रक्षेत धनैरपि ।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि ॥
स कुरुष्व मया कार्य्यं तारयात्मानमात्मना ।
अनुजानीहि मामार्य्य सुतौ मे परिपालय ॥
उक्तं प्रियाण्यवाप्तानि धर्म्मश्च चरितो महान् ।
त्वत्प्रसूतिः प्रिया प्राप्ता, न मां तप्स्यत्यजीवितम् ॥

---

(१५) व्युष्टिः स्तुतिः, प्रशंसा इति यावत् ।

जातपुत्त्रा च वृद्धा च प्रियकामा च ते सदा ।
समीक्ष्यैतदहं सर्व्वं व्यवसायं करोम्यतः ॥
उत्सृज्यापि हि मामार्य्य प्राप्स्यस्यन्यामपि स्त्रियम् ।
ततः प्रतिष्ठितो धर्म्मो भविष्यति न संशयः ॥
एतत् सर्व्वं समीक्ष्य त्वमात्मत्यागकृद्गर्हितम् ।
आत्मानं तारयाद्यासु कुलं चेमौ च दारकौ ॥

तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तु ।
ततो दुःखपरीताङ्गी कन्या तावभ्यभाषत ॥
किमेवं भृशदुःखार्त्तौ रोरूयेतामनाथवत् ।
ममापि श्रूयतां वाक्यं श्रुत्वा च क्रियतां क्षमम् ॥
धर्म्मतोऽहं परित्याज्या युवयोर्नात्र संशयः ।
त्यक्तव्यां मां परित्यज्य त्राहि सर्व्वं मयैकया ॥
इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति ।
अस्मिन्नुपस्थिते काले तरत प्लववन्मया ॥
इह वा तारयेद्दुर्गादुत वा प्रेत्य भारत ।
सर्व्वथा तारयेत् पुत्त्रः, पुत्त्र इत्युच्यते बुधैः ॥
आकाङ्क्षन्ते च दौहित्रान्मयि नित्यं पितामहाः ।
तत् स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ॥
भ्राता च मम बालोऽयं गते लोकममुं त्वयि ।
अचिरेणैव कालेन विनश्येत्न हि संशयः ॥

तातेऽपि हि गते स्वर्गं विनष्टे च ममानुजे ।
पिण्डः पितॄणां व्युच्छिद्येत्, तत् तेषां विप्रियं भवेत् ॥
पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयम् ।
दुःखात् दुःखतरं प्राप्य म्रियेयमतथोचिता(१६) ॥
त्वयि त्वरोगे निर्मुक्ते माता भ्राता च मे शिशुः ।
सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयम् ॥
आत्मा पुत्रः, सखा भार्य्या, कृच्छ्रन्तु दुहिता किल ।
स कृच्छ्रान्मोचयात्मानं माञ्च धर्मे नियोजय ॥
अनाथा कृपणा बाला यत्रक्वचनगामिनी ।
भविष्यामि त्वया तात विहीना कृपणा सदा ॥
तदस्मदर्थं धर्मार्थं प्रसवार्थञ्च सत्तम ।
आत्मानं परिरक्षस्व(१७) त्यक्तव्यां माञ्च सन्त्यज ॥
अवश्यकरणीये च मा त्वां कालोऽत्यगादयम् ॥
किन्वतः परमं दुःखं यद्वयं स्वर्गते त्वयि ।
याचमानाः परादन्नं परिधाविमहि श्ववत् ॥
त्वयि त्वरोगे निर्मुक्ते क्लेशादस्मात् सबान्धवे ।
अमृतेव सती लोके भविष्यामि सुखान्विता ॥
एवं बहुविधं तस्या निशम्य परिदेवितम् ।
पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः ।

(१६) म्रियेयमित्यार्षम्, म्रियेय । (१७) परिरक्षस्वेत्यार्षम्, परिरक्ष ।

ततः प्ररुदितान् सर्व्वान् निशम्याथ सुतस्तदा ।
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् ॥
मा पितः क्रन्द मा मातर्मा स्वसस्त्विति चाब्रवीत् ।
प्रहसन्निव सर्व्वांस्तानेकैकमनुसर्पति ॥
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेनाहं हनिष्यामि राक्षसं पुरुषादकम् ॥
तथापि तेषां दुःखेन परीतानां निशम्य तत् ।
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान् ॥
अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान् ।
गतासूनमृतेनेव जीवयन्तीदमब्रवीत् ॥
कुतोमूल(१८)मिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः ।
विदित्वाप्यपकर्षेयं शक्यं चेदपकर्षितुम् ॥

ब्राह्मण उवाच ।

उपपन्नं सतामेतत् यद्ब्रवीषि तपोधने ।
न तु दुःखमिदं शक्यं मानुषेण व्यपोहितुम् ॥
समीपे नगरस्यास्य बको वसति राक्षसः ।
ईशो जनपदस्यास्य ——— — ———ः ॥

(१८) कुतः कस्मात् मूलं कारणं यस्य तत्, कस्माद्धेतोः उत्पन्नमिति यावत् । अलुक्समासः ।

पुष्टो मानुषमांसेन दुर्बुद्धिः पुरुषादकः ।
रक्षत्यसुरराट् नित्यमिमं जनपदं बली ।
नगरञ्चैव देशञ्च रक्षोबलसमन्वितम् ॥
तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयम् ॥
वेतनं तस्य विहितं शालिवाहस्य(१९) भोजनम् ।
महिषौ पुरुषश्चैको यस्तदादाय गच्छति ॥
एकैकश्चापि पुरुषः तत् प्रयच्छति भोजनम् ।
स वारो बहुभिर्वर्षैर्भवत्यसुकरो नरैः ॥
तद्विमोक्षाय ये केचित् यतन्ति(२०) पुरुषाः क्वचित् ।
सपुत्रदारान् तान् हत्वा तद्रक्षो भक्षयत्युत ॥
विषयेष्वेषु राजा, स नायं नयमुपाश्रितः ।
उपायं तं न कुरुते यत्नादपि स मन्दधीः ।
अनामयं जनस्यास्य येन स्यादद्य शाश्वतम् ॥
एतदर्हा वयं नूनं, वसामो दुर्बलस्य ये ।
विषये नित्यमुद्विग्नाः कुराजानमुपाश्रिताः ॥
राजानं प्रथमं विन्देत् ततो भार्य्यां ततो धनम् ।
त्रयस्य सञ्चयेनास्य ज्ञातीन् पुत्रांश्च तारयेत् ॥

---

(१९) वाहः परिमाणविशेषः । शालिवाहस्य वाहपरिमितस्य शालिधान्यभक्तस्येत्यर्थः ।

(२०) यतन्तीत्यार्षम्, यतन्ते ।

विपरीतं मया चेदं चेयं सर्व्वमुपार्जितम् ।
तदिमामापदं प्राप्य भृशं तप्यामहे वयम् ॥
सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः ।
भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया ॥
न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित् ।
सुहृज्जनं प्रदातुञ्च न शक्ष्यामि कदाचन ॥
गतिञ्चैव न पश्यामि तस्मान्मोक्षाय रक्षसः ।
सोऽहं दुःखार्णवे मग्नो महत्यसुतरे भृशम् ॥
सहैवैतैर्गमिष्यामि बान्धवैरद्य राक्षसम् ।
ततो नः सहितान् क्षुद्रः सर्व्वानेवोपयोक्ष्यति ॥

कुन्ती उवाच ।

न विषादस्त्वया कार्य्यो भयादस्मात् कथञ्चन ।
उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः ॥
एकस्तव सुतो बालः कन्या चैका तपस्विनी ।
न चैतयोस्तथा पत्न्या गमनं तत्र रोचये ॥
मम पञ्च सुता ब्रह्मन् तेषामेको गमिष्यति ।
त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥

ब्राह्मण उवाच ।

नाहमेतत् करिष्यामि जीवितार्थी कथञ्चन ।
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणान् वियोजयन् ॥

ब्रह्मवध्यात्मवध्या वा श्रेयानात्मवधो मम ।
ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते ॥
न चाहं वधमाकाङ्क्षे(२१) स्वयमेवात्मनः शुभे ।
परैः कृते वधे पापं न किञ्चिन्मयि विद्यते ॥
अभिसन्धिकृते तस्मिन् ब्राह्मणस्य वधे मया ।
निष्कृतिं न प्रपश्यामि इह लोके परत्र च ॥
आगतस्य गृहं त्यागस्तथैव शरणार्थिनः ।
याचमानस्य च वधो नृशंसो गर्हितो बुधैः ॥
कुर्य्यान्न निन्दितं कर्म्म न नृशंसं कथञ्चन ।
इति पूर्व्वं महात्मान आपद्धर्म्मविदो विदुः ॥
श्रेयांस्तु सहदारस्य विनाशोऽद्य मम स्वयम् ।
ब्राह्मणस्य वधं नाहमनुमंस्ये कदाचन ॥

कुन्ती उवाच ।

ममाप्येषा मतिर्ब्रह्मन् विप्रा रक्ष्या इति स्थिरा ।
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत् ॥
न चासौ राक्षसः शक्तो मम पुत्रविनाशने ।
वीर्य्यवान् मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥
राक्षसाय च तत् सर्व्वं प्रापयिष्यति भोजनम् ।
मोक्षयिष्यति चात्मानमिति मे निश्चिता मतिः ॥

(२१) आकाङ्क्षे इत्यार्षम्, आकाङ्क्षामि ।

समागताश्च वीरेण दृष्टपूर्व्वाश्च राक्षसाः ।
बलवन्तो महाकाया निहतास्त्वप्यनेकशः ॥
न त्विदं केषुचिद् ब्रह्मन् व्याहर्त्तव्यं कथञ्चन ।
विद्यार्थिनो हि मे पुत्रान् विप्रकुर्य्युः कुतूहलात् ॥
गुरुणा चाननुज्ञातो ग्राहयेद् यं सुतो मम ।
न स कुर्य्यात्तथा कार्य्यं विद्ययेति सतां मतम् ॥

एवमुक्तस्तु पृथया स विप्रो भार्य्यया सह ।
हृष्टः सम्पूजयामास तद्वाक्यममृतोपमम् ॥
ततः कुन्ती च विप्रश्च सहितावनिलात्मजम् ।
तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ ॥

करिष्य इति भीमेन प्रतिज्ञातेऽथ भारत ।
आजग्मुस्ते ततः सर्व्वे भैक्ष्यमादाय पाण्डवाः ॥
आकारेणैव तत् ज्ञात्वा पाण्डुपुत्रो युधिष्ठिरः ।
रहः समुपविश्यैकस्ततः पप्रच्छ मातरम् ॥
किं चिकीर्षत्ययं कर्म्म भीमो भीमपराक्रमः ? ।
भवत्यानुमतः कच्चित् स्वयं वा कर्त्तुमिच्छति ? ॥

कुन्ती उवाच ।

ममैव वचनादेष करिष्यति परन्तपः ।
ब्राह्मणार्थे महत् कृत्यं मोक्षाय नगरस्य च ॥

युधिष्ठिर उवाच।

किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतम्।
परित्यागं हि पुत्रस्य न प्रशंसन्ति साधवः॥
कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि।
लोक-वेद-विरुद्धं हि पुत्रत्यागात् कृतं त्वया॥
यस्य बाहू समाश्रित्य सुखं सर्व्वे शयामहे।
राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः॥
यस्य दुर्य्योधनो वीर्य्यं चिन्तयन्नमितौजसः।
न शेते रजनीः सर्व्वाः दुःखाच्छकुनिना सह॥
यस्य वीरस्य वीर्य्येण मुक्ता जतुगृहाद्वयम्।
अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः॥
यस्य वीर्य्यं समाश्रित्य वसुपूर्णां वसुन्धराम्।
इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान्॥
तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया।
कच्चिन्नु दुःखैर्बुद्धिस्ते विलुप्ता गतचेतसः?॥

कुन्ती उवाच।

युधिष्ठिर न सन्तापस्त्वया कार्य्यो वृकोदरे।
न चायं बुद्धिदौर्ब्बल्यादव्यवसायः कृतो मया॥

इह विप्रस्य भवने वयं पुत्र सुखोषिताः ।
अज्ञाता धार्त्तराष्ट्राणां सत्कृता वीतमन्यवः ॥
तस्य प्रतिक्रिया पार्थ मयेयं प्रसमीक्षिता ।
एतावानेव पुरुषः कृतं यस्मिन् न नश्यति(२२) ।
यावच्च कुर्य्यादन्योऽस्य कुर्य्याद्बहुगुणं ततः ॥
दृष्ट्वा भीमस्य विक्रान्तं(२३) तदा जतुगृहे महत् ।
हिडिम्बस्य वधाच्चैवं विश्वासो मे वृकोदरे ॥
बाह्वोर्बलं हि भीमस्य नागायुतसमं महत् ।
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात् ॥
वृकोदरेण सदृशो बलेनान्यो न विद्यते ।
यो व्यतीयात् युधि श्रेष्ठमपि वज्रधरं स्वयम् ॥
जातमात्रः पुरा चैव ममाङ्कात् पतितो गिरौ ।
शरीरगौरवादस्य शिला गात्रैर्विचूर्णिता ॥
तदहं प्रज्ञया ज्ञात्वा बलं भीमस्य पाण्डव ।
प्रतिकार्य्ये च विप्रस्य ततः कृतवती मतिम् ॥
नेदं लोभान्न चाज्ञानात् न च मोहाद्विनिश्चितम् ।
बुद्धिपूर्व्वन्तु धर्म्मस्य व्यवसायः कृतो मया ॥

---

(२२) यस्मिन् पुरुषे कृतं न नश्यति, यः कृतघ्नो न भवतीत्यर्थः, स एव पुरुषः सार्थकनामा इति भावः ।

(२३) विक्रान्तं विक्रमम् ।

अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः।
प्रतीकारश्च वासस्य धर्म्मश्च चरितो महान्॥
यो ब्राह्मणस्य साहाय्यं कुर्य्यादर्थेषु कर्हिचित्।
क्षत्रियः स शुभान् लोकान् प्राप्नुयादिति मे मतिः॥
क्षत्रियस्यैव कुर्व्वाणः क्षत्रियो वधमोक्षणम्।
विपुलां कीर्त्तिमाप्नोति लोकेऽस्मिंश्च परत्र च॥
वैश्यस्यार्थे च साहाय्यं कुर्व्वाणः क्षत्रियो भुवि।
स सर्व्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम्॥
शूद्रन्तु मोचयन् राजा शरणार्थिनमागतम्।
प्राप्नोतीह कुले जन्म सद्द्रव्ये राजपूजिते॥
एवं मां भगवान् व्यासः पुरा पौरवनन्दन।
प्रोवाचासुकरप्रज्ञः तस्मादेवं चिकीर्षितम्॥

युधिष्ठिर उवाच।

उपपन्नमिदं मातस्त्वया यद्बुद्धिपूर्व्वकम्।
आर्त्तस्य ब्राह्मणस्यैतदनुक्रोशादिदं कृतम्॥
ध्रुवमेष्यति भीमोऽयं निहत्य पुरुषादकम्।
सर्व्वथा ब्राह्मणस्यार्थे यदनुक्रोशवत्यसि॥
यथा त्विदं न विन्देयुर्नरा नगरवासिनः।
तथायं ब्राह्मणो वाच्यः परिग्राह्यश्च(२४) यत्नतः॥

(२४) संग्राह्यः, अस्मत्पक्षः कर्त्तव्य इत्यर्थः।

ततो रात्र्यां व्यतीतायामन्नमादाय पाण्डवः ।
भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः ॥
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली ।
आजुहाव ततो नाम्ना तदन्नमुपपादयन् ॥
ततः स राक्षसः क्रुद्धो भीमस्य वचनात् तदा ।
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः ।
महाकायो महावेगो दारयन्निव मेदिनीम् ।
लोहिताक्षः करालश्च लोहितश्मश्रुमूर्द्धजः ।
आकर्णाद्भिन्नवक्त्रश्च शङ्कुकर्णो विभीषणः ।
त्रिशिखां भ्रुकुटीं कृत्वा सन्दश्य दशनच्छदम् ॥

त्रिशेषकम् ।

भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ॥
कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ॥
भीमसेनस्ततः श्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ॥
रवं स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद् भीमसेनं जिघांसुः पुरुषादकः ॥

तथापि परिभूयैनं प्रेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा(२५) ॥
अमर्षेण तु संपूर्णः कुन्तीपुत्रं वृकोदरम् ।
जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः ॥
तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।
नैवावलोकयामास राक्षसं भुङ्क्त एव सः ॥
ततः स भूयः संक्रुद्धो वृक्षमादाय राक्षसः ।
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली ॥
ततो भीमः शनैर्भुक्त्वा तदन्नं पुरुषर्षभः ।
वार्युपस्पृश्य संहृष्टस्तस्थौ युधि महाबलः ॥
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् ।
सव्येन पाणिना भीमः प्रहसन्निव भारत ॥
ततः स पुनरुद्यम्य वृक्षान् बहुविधान् बली ।
प्राहिणोद् भीमसेनाय तस्मै भीमश्च पाण्डवः ॥
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
घोररूपं महाराज नरराक्षसराजयोः ॥
नाम विश्राव्य तु बकः समभिद्रुत्य पाण्डवम् ।
भुजाभ्यां परिजग्राह भीमसेनं महाबलम् ॥

(२५) परान् श्रेष्ठान् वीरान् हन्तीति, यद्वा परेषु शत्रुषु ये वीराः तान् हन्तीति । परवीर्यहा इति वा पाठः ।

भीमसेनोऽपि तद्रक्षः परिरभ्य महाभुजः।
विस्फुरन्तं महाबाहुं विचकर्ष बलाद् बली॥
स कृष्यमाणो भीमेन कर्षमाणश्च पाण्डवम्।
समयुज्यत तीव्रेण क्रमेण पुरुषादकः॥
तयोर्वेगेन महता पृथिवी समकम्पत।
पादपांश्च महाकायांश्चूर्णयामासतुस्तदा॥
हीयमानन्तु तद्रक्षः समीक्ष्य पुरुषादकम्।
निष्पिष्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः॥
ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव।
बाहुना परिजग्राह दक्षिणेन शिरोधराम्।
सव्येन च कटीदेशे गृह्य(२९) वाससि पाण्डवः॥
तद्रक्षो द्विगुणं चक्रे महान्तं भैरवं रवम्॥
ततोऽस्य रुधिरं वक्त्रात् प्रादुरासीत् विशाम्पते।
भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः॥
ततः स भग्नपार्श्वाङ्गो नदित्वा भैरवं रवम्।
शैलराजप्रतीकाशो गतासुरभवद् बकः॥

---

(२९) गृह्य इत्यार्षम्, गृहीत्वा।



द्वितीयभागः समाप्तः।